॥ श्रीः ॥

श्रीगणेशाय नमः ।

# पराशरस्मृतिः ।

## विद्वन्मनोहराख्यव्याख्यासहिता ।

श्रीवत्साङ्कितवक्षसः प्रणयिनो नित्यार्चने संविधा-
माधातुं निहितं गिरीन्द्रसुतयोत्सङ्गे स्वयं धूर्जटेः ।
चूडाचुम्बिकलङ्कपङ्किलकलं चन्द्रं मृणालभ्रमा-
दादातुं करमुत्क्षिपन्तमसकृद्दुण्ढिं चिरं भावये ॥ १ ॥
यं साक्षात्कर्तुमाद्यं पुरुषमविकृतिं योगिनः शुद्धचित्ता
मैत्र्याद्यैः क्लेशकर्मोद्भवविविधविपाकाशयैरप्रमृष्टाम् ।
भेदख्यातिं प्रपद्य प्रकृतिपुरुषयोराश्रयन्ते सबीजं
योगं तं श्रीसहायं हरिमनिशमहं सच्चिदानन्दमीडे ॥ २ ॥
धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
व्याख्यायते कलियुगोचितवर्णधर्म-
शास्त्रं पराशरमुखोद्गतमल्पशब्दैः ॥ ३ ॥
तरतः सततं विनैव पोतं स्मृतिसिन्धौ दृढतर्कनक्रबन्धौ ।
समृकण्डुजनेरिवावलम्बो मम भूयादभयाय केशवोऽयम् ॥ ४ ॥
माधवाचार्यनिर्दिष्टपथमार्गानुसारिणः ।
स्खलने ऽपि न मे दोषः परप्रत्ययगामिनः ॥ ५ ॥

इह खलु कलिकश्मलितानुभावान्वर्णाश्रमाननुगृह्णानैः परम कारुणिकैर्महामुनिभिर्वेदाभ्यासपुरस्सरैस्तत्त्वजिज्ञासया पृष्टान् कलिकाला

नुष्ठेयान् वर्णाश्रमधर्मान् पराशरमुनिमुखादाकर्ण्य कश्चिद्द्विपश्चिद्व्रृषिर्निरवद्यैः पद्यैरष्टानषट्शतैर्द्वादशाध्यायान् परिकल्प्य काण्डत्रयेण तान्निबबन्ध ।

तत्राद्यपद्येन ग्रन्थावतरबीजमाह ।

**अथातो हिमशैलाग्रे देवदारुवनाश्रये ।**
**व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा ॥ १ ॥**

उपनीय शौचाचारांश्च शिक्षयेदित्यनेनोपनयनानन्तरं शौचाचाराणां यतो विज्ञेयत्वमुपदिश्यते अतो हेतोरथोपनयनानन्तरं हिमशैलाग्रे हिमाचलशिखरे देवदारूणां वनाश्रयत्वेन विविक्ते मनोऽनुकूले च विक्षेपकारणाभावेन तत्त्वप्रतिभासयोग्य इति यावत् । व्यासं पराशरात्मजं कृष्णद्वैपायनम्, एकाग्र यमनियमाद्यष्टाङ्गाभ्यामपाटवादेकस्मिन्विषये वृत्तिप्रवाहरूपेण प्रतिष्ठितचित्तं पञ्चधासु चित्तभूमिष्वतीन्द्रियवस्तुदर्शनयोग्यत्वदर्थभूमिस्थितचित्तमिति यावत् । आसीनमैकाग्र्यनिर्वाहाय "आसीनस्य सम्भवादि"ति न्यायात् । ऋषयो ऽतीन्द्रियार्थदर्शनयोग्यास्तापसाः पुरा कलियुगादावपृच्छन् पप्रच्छुः । अन्वयव्यतिरेकाभ्यां प्रश्नस्यैवावगत्युपायत्वात् । विधिवत्प्रणिपातेन परिप्रश्नेन सेवयेति शास्त्रेण प्रणिपातपूर्वकप्रश्नावगतस्य श्रेयस्करत्वाच्च ।

प्रश्नस्वरूपमाह ॥

**मानुषाणां हितं धर्मं वर्तमाने कलौ युगे ।**
**शौचाचारं यथावच्च वद सत्यवतीसुत ॥ २ ॥**

अर्वाचीनानां पश्वादीनामसामर्थ्यादुत्तमानां देवादीनां धर्मानुष्ठाने प्रयोजनाभावाच्च मनुष्यमात्राधिकारकत्वाच्छास्त्रस्येति मानुषाणामित्यधिकारिनिर्देशः । साधारण्य तु वर्णाश्रमानुलोमजप्रतिलोमजानभिप्रेत्य । हितमभिमतफलसाधनं साक्षात्परम्परया वा ऐहिकामुष्मिकाभ्युदयनिःश्रेयससाधनमिति यावत् । धर्ममभ्युदयनिःश्रेयसे साधनीभूय धारयतीति

धर्मः, स्वलक्षणप्रमाणाभ्यां चोदनसूत्रव्यवस्थापितं शौचाचारं शौचं शुद्धिः प्रायश्चित्तादिराचारः स्नानाचमनादिस्तयोः समाहारस्तमाचारप्रायश्चित्ते इति यावत् । व्यवहारस्य न्यायमूलकत्वेन तस्य च सर्वयुगसाधारण्येनाग्रहणात् । वर्तमाने कलौ युगे स्मृत्यन्तरधर्मस्य सानुभावपुरुषानुष्ठेयत्वेन कलिकालीनाल्पसामर्थ्यपुरुषविषयत्वाभावात्तत्कालानुष्ठेयं यथावत्कलिकालानुष्ठेयधर्मप्रतिपादकश्रुत्यर्थस्मरणपूर्वकं चकारात्तत्कालाननुष्ठेयं च भो सत्यवतीसुत सत्यवदनशीलात्मज वद कथय । एतेन प्रेक्षावत्प्रवृत्तिप्रयोजकं विषयप्रयोजनसम्बन्धाधिकारिलक्षणमनुबन्धचतुष्टयमप्यभिहितम् ।

एवं पृष्टो व्यासः किं चकार ।

तच्छ्रुत्वा ऋषिवाक्यं तु सशिष्योऽग्न्यर्कसन्निभः ।
प्रत्युवाच महातेजाः श्रुतिस्मृतिविशारदः ॥ ३ ॥

तत्पूर्वोदितमृषीणां वाक्यं श्रुत्वा सशिष्यः सुमन्तुजैमिनिवैशम्पायनपैलसुतैश्चतुर्वेदपुराणसंहिताप्रवर्तकैः शिष्यैस्समेतोऽग्न्यर्कसन्निभो ज्वलनादित्यवद्विजिततेजोभिः पूर्णोऽत एव महातेजा ब्रह्मवर्चस्वी श्रुतिस्मृतिविशारदो वेदशास्त्रनिपुणः तु अनन्तरं प्रत्युवाच प्रतिवचनमाह ।

न चाहं सर्वतत्त्वज्ञः कथं धर्मं वदाम्यहम् ।
अस्मत्पितैव प्रष्टव्य इति व्यासः सुतोऽवदत् ॥ ४ ॥

अपशवो वा अन्ये गोअश्वेभ्य इतिवच्च चाहं सर्वतत्त्वज्ञ इति स्वस्य सर्वतत्त्वज्ञानाभावप्रतिपादनं पितृप्रशंसार्थम् । यद्वा पराशरस्यैव प्रातिकल्पं कलिधर्मप्रवचनाधिकारिपुरुषत्वं श्रुतिस्मृतिभ्यामवगत्य स्वस्यानुचितं कलिधर्मानुशासनं मन्वानो व्यासः सुतोऽहं धर्मं कथं वदाम्यस्मत्पितैव पराशरः प्रष्टव्य इत्यवदत् ।

एवं प्रत्युक्ता ऋषयः किं चक्रुः ।

ततस्ते ऋषयः सर्वे धर्मतत्त्वार्थकाङ्क्षिणः ।
ऋषिं व्यासं पुरस्कृत्य गता बदरिकाश्रमम् ॥ ५ ॥

ततो ऽनन्तरं ते प्रष्टार ऋषयः सर्वे सन्निहितव्यासनिराकरणेनासन्निहितपराशरस्य पुनः प्रष्टव्यत्वेन चाध्यवसायादविच्युता इति यावत् । धर्मतत्त्वार्थकाङ्क्षिणः धर्मस्य कलिकालानुष्ठेयस्य तत्त्वमबाधितं रूपं तत्काङ्क्षिणो ऽर्थोऽभ्युदयसाधनं तेन श्येनाद्यभिचाराणामनर्थानां निरासः, तं काङ्क्षन्ति अत एव ऋषिमतीन्द्रियधर्मतत्त्वार्थप्रश्नाभियुक्तं व्यासं पुरस्कृत्य तन्मुखेनैव प्रष्टुकामाः पराशराश्रमं बदरिकाश्रमं गताः जग्मुः । तस्य कलिकल्मषनिर्मोकक्षमत्वेन पराशरनिवासत्वमुचितम् । तदुक्तं कूर्मपुराणे ।

बदर्याश्रममासाद्य मुमुचे कलिकल्मषान् ।
तत्र नारायणो देवो नरेणास्ति सनातन इति ।

तमाश्रमं विशिनष्टि ।

**नानापुष्पलताकीर्णं फलवृक्षैरलङ्कृतम् ।**
**नदीप्रस्रवणोपेतं पुण्यतीर्थोपशोभितम् ॥ ६ ॥**
**मृगपक्षिनिनादैश्च देवतायतनावृतम् ।**
**यक्षगन्धर्वसिद्धैश्च नृत्यगीतैरलङ्कृतम् ॥ ७ ॥**

एतैराश्रमविशेषणैः पराशरतपःसिद्धेरुत्कर्षो ऽभिहितः । तथा हि नानाविधपुष्पावनम्रलताकीर्णत्वेन देवार्चनलक्षणतपःसिद्धिः फलोपचितवृक्षोत्कर्षादाहारनियतेः ग्रीष्मकाले ऽप्यशुष्यन्नदीप्रस्रवणप्रवाहेण त्रिषवणस्नानपाननियतेः, उष्णतीर्थविष्णुगङ्गादिपुण्यतीर्थशोभया च नानातीर्थाटनतपःसिद्धिः मृगपक्षिणामन्योन्यवैरत्यागेन विस्रब्धनिनादादहिंसानुष्ठानस्य । उक्तं च पातञ्जले तपःसिद्धिलिङ्गसूत्रेण "तत्सन्निधौ वैरत्याग" इति । देवतायतनावृतत्वेन निरन्तरस्वस्वाराध्यदेवताध्यानयोगस्य नृत्यगीताद्यलङ्कृतत्वेन सुखहेतुतौर्यत्रिकपरिहारस्य ततश्च यद्यत्तपः पराशरेणात्र चीर्णं तत्फलं तत्रोपस्थितमिति तात्पर्यम् ।

आश्रमप्राप्त्यनन्तरवृत्तमाह ।

**तस्मिन्नृषिसभामध्ये शक्तिपुत्रं पराशरम् ।**
**सुखासीनं महातेजोमुनिमुख्यगणावृतम् ॥ ८ ॥**
**कृताञ्जलिपुटो भूत्वा व्यासश्च ऋषिभिः सह ।**
**प्रदक्षिणाभिवादैश्च स्तुतिभिः समपूजयत् ॥ ९ ॥**

तस्मिन्नाश्रमे ऋषीणां तापसानां सभा समूहस्तन्मध्ये । तेन तेषां वक्ष्यमाणकलिधर्मेषु संमतिर्दर्शिता । शक्तेर्वसिष्ठतनयस्य पुत्रं तेन विशिष्टजन्मना ऽप्यनुभावविशेषो दर्शितः । पराशरम्

पराकृताः शरा यस्माद्राक्षसानां वधार्थिनाम् ।
अतः पराशरो नाम ऋषिरुक्तो मनीषिभिः ॥

इत्यादिनिरुक्तनामानं सुखासीनमैकाग्र्यसाधनासनोपविष्टम् । महातेजा ब्रह्मवर्चस्वी । मुनिषु मुख्याः स्मृतिकर्तारो गोत्रकर्त्तारश्चाग्र्याद्यः तत्समुदायेनाप्यावृतं तेन स्मृतिकर्तृणामप्यत्र सम्मतिर्ज्ञापिता । कृतमञ्जलिपुटं येनासौ व्यासः तैः प्रष्टृभिर्ऋषिभिः सह प्रदक्षिणाभिः स्मृत्युक्तैरभिवादैर्वैदिकलौकिकाभिस्स्तुतिभिर्गुणकीर्तनैश्चकारात्पादोपसंग्रहणादिभिस्सम्यक्कायवाङ्मनोभिरपूजयत् । अञ्जलिकरणं चोक्तमाश्वलायनेन

उत्तानं वामपाणिं वाङ्मुखं दक्षिणं तथा ।
पाण्योः पृष्ठं दृढं कुर्यादङ्गुलीभिः परस्परम् ॥
अङ्गुष्ठौ च दृढीकृत्य क्रियते या तथा ऽञ्जलिः ।
सा ब्रह्मणा कृतत्वात्तु ब्रह्माञ्जलिरिति स्मृता ॥
वेदारम्भे विशेषेण समाधौ च विशिष्यते ।
ब्रह्मयज्ञे च कार्या स्यात्सावित्रीग्रहणे तथेति ॥

एतेन गुरूपसत्तिप्रकारो दर्शितः ।

एवं पूजितः पराशरः किं चकार ।

**ततः संतुष्टहृदयः पराशरमहामुनिः ।**
**आह सुस्वागतं ब्रूहीत्यासीनो मुनिपुङ्गवः ॥ १० ॥**

ततो ऽनन्तरं सम्यक् तुष्टहृदयः पराशरनामा महामुनिरतिमननशीलो मुनिपुङ्गवस्सर्वमुनिमान्यस्तेन तपसा वयसा च वृद्धत्वादासीन एव नाभ्युत्थितस्तस्य "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यत" इति स्मृत्या स्थविरविषयत्वात्, सुस्वागतं ब्रूहीत्याह।

एवमनुयुक्तो व्यासः प्रतिवचनपूर्वकं पृच्छतीत्याह।

**कुशलं सम्यगित्युक्त्वा व्यासः पृच्छत्यतः परम्।**

अतः परं पराशरस्य कुशलप्रश्नानन्तरं स्वकुशलं सम्यगभिधायानन्तरं विवक्षितमर्थं मुनिप्रश्नादवश्यजिज्ञासितव्यं व्यासः पृच्छति। प्रश्नप्रकारमाह।

**यदि जानासि भक्तिं मे स्नेहाद्वा भक्तवत्सल ॥ ११ ॥**
**धर्मं कथय मे तात ह्यनुग्राह्यो ऽस्म्यहं तव।**

यदि मे भक्तिमाराध्यत्वेन स्वज्ञानविषयां जानासि तदा भक्तवत्सलत्वेन यदि वा पुत्रस्नेहेनोभयथाप्यनुग्राह्यस्तवाहमिति हे तात धर्मं, वर्तमाने कलौ युग" इति मुनिप्रश्नबला"त्सर्वे नष्टाः कलौ युग"इति प्रश्नशेषाच्च कलिकालानुष्ठेयं मे मह्यम् कथय पुनर्मदितिवचनं स्वस्योपदेशार्हभावप्रयोजकधर्मवत्त्वज्ञापनाय यथोक्तं गन्धर्वविद्यायां छन्दोगैः "इदं तावज्ज्येष्ठपुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय चान्तेवासिने नान्यस्मै कस्मै च नेति।

ननु मन्वादिधर्माः किं त्वया न श्रुता येन पुनर्धर्मप्रश्नः क्रियते इत्याशङ्क्य बुभुत्सितं धर्मं परिशेषयितुमाह।

**श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा॥ १२ ॥**
**गार्गीया गौतमीयाश्च तथैवौशनसाः स्मृताः।**
**अत्रेर्विष्णोश्च संवर्ताद्दक्षादङ्गिरसस्तथा ॥ १३ ॥**
**शातातपाच्च हारीताद्याज्ञवल्क्यात्तथैव च।**
**आपस्तम्बकृता धर्माः शंखस्य लिखितस्य च ॥ १४ ॥**

**धर्मराजकृताश्चैव बृहस्पतिकृताश्च ये ।**
**कात्यायनकृताश्चैव तथा प्राचेतसान्मुनेः ॥ १५ ॥**

मे मयेत्यर्थः । बहुलानुशासनात् । पञ्चम्यन्तानामश्व्यादिपदाना-मनुषक्तेन श्रुतपदेन सम्बन्धः । आपस्तम्बेन कृताः प्रोक्ता इति यावत् शंखस्य लिखितस्य च प्रवचनेन ये संवर्धिनो धर्माः, प्रचेता एव प्राचेतसः वायसराक्षसादिव ।

यदि स्मार्ता मानवादयो धर्माः श्रुतास्तर्हि श्रौता किं बुभुत्सिता इत्याशङ्कित आह ।

**श्रुता ह्येते भवत्प्रोक्ताः श्रुत्यर्था मे न विस्मृताः ।**
**अस्मिन्मन्वन्तरे धर्माः कृतत्रेतादिके युगे ॥ १६ ॥**

अस्मिन् वर्तमाने वैवस्वते मन्वन्तरे तथा तदन्तर्गतेषु कृतत्रेताद्वापरेषु आदिशब्दाद्द्वापरग्रहणं न कलेस्तस्य प्रायेण श्रौतधर्मविकलत्वात् । युगेषु ये श्रुत्यर्था प्रत्यक्षश्रुतिविहिता अग्निहोत्रादयो धर्माः, एते मया श्रुताः । तदेतत्तवाऽपि प्रसिद्धमिति हिशब्दार्थः, तत्र हेतुर्भवत्प्रोक्ता इति श्रुतानामपि विस्मरणे पुनः श्रवणं मयेप्सितमित्याशङ्किते न विस्मृता इत्युक्तं ततश्च स्मार्तानां मानवादिधर्माणां श्रौतानामग्निहोत्रादीना-मेतन्मन्वन्तरान्तर्गतकृतत्रेताद्वापरधर्माणां च नाय प्रश्नस्तस्मात्परिशेषेण कलिधर्मप्रश्न इति सिद्धम् । एतन्निर्देशेन प्रतियुगमिव प्रतिमन्वन्तरमपि धर्मभेद उक्तः । तथा च वायवीये

प्रतिमन्वन्तरं चैव श्रुतिरन्या विधीयत इति ।

यद्यपि नित्यत्वात्सर्वकालमेकरूप एव वेद इति न्यायविदां घण्टाघोषेण प्रतिमन्वन्तरमध्येयवेदस्वरूपभेदो नास्ति तथाऽपि कालभेदेन तत्तत्कालीनधर्मविधायकानां वेदवाक्यानां भेदे नानुपपत्तिर्यथा वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः पौर्णमास्या पौर्णमास्यया यजेतामावास्यायाममावास्ययेत्यादीनां तथा प्रतिमन्वन्तरमपि

तत्तद्धर्म्मविधायकवेदवाक्यभेदे न दोषस्तथा च तन्मूलकधर्माणामपि भेद इत्यलम्। एतेन "श्रुतिश्च शौचमाचारः प्रतिकालं त्रिभिद्यत" इत्यौपकायनवाक्यमपि व्याख्यातम्।

तमेव धर्मभेदं विवृणोति।

**सर्वे धर्माः कृते जाताः सर्वे नष्टाः कलौ युगे।**
**चातुर्वर्ण्यं समाचारं किञ्चित्साधारणं वद॥ १७॥**

सर्वे देशकालावस्थादिभेदेन बहुविधा ये धर्माः।

धर्मा बहुविधा लोके श्रुतिभेदमुखोद्गताः।
देशभेदाच्च दृश्यन्ते कुलभेदात्तथैव च॥
जातिधर्मा वयोधर्मा गुणधर्माश्च शोभने।
शरीरकालधर्माश्च आपद्धर्मास्तथैव च॥
एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः।

इत्यानुशासनिकोक्तान् कृते सत्ययुगे युगसामर्थ्येनाक्षीणप्रभावाणां पुरुषाणामसन्दिग्धाविपर्यस्तप्रमाणप्रमेया यथावदनुष्ठेयाश्च जातास्ते त्रेतादिषु पादहानिक्रमेण क्षीयमाणाः कलौ युगे यथोत्तरं सर्वात्मना विनष्टास्तादृशप्रमातृप्रमाणाद्यभावात्। तदुक्तं पुराणसारे

कृते चतुष्पात्सकलो निर्व्याजो व्याधिवर्जितः।
वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्पुरा॥
धर्मः पादविहीनश्च त्रिभिरंशैः प्रतिष्ठितः।
त्रेतायां द्वापरेऽर्द्धेन व्यामिश्रो धर्म इष्यते॥
त्रिपादहीनस्तिष्ये तु सत्तामात्रेण तिष्ठति।

वृषो वृष रूपः तिष्यः कलिः। मात्स्ये।

ततः प्रभृत्ययं लोकः सर्वोऽप्यापत्स्यते भृशम्।
अनृतोऽपहितो भ्रष्टो धर्मतः कामतोऽर्थतः॥
श्रौतस्मार्त्ते प्रशिथिले नष्टधर्माश्रमे तथा।
सङ्करं दुर्बलात्मानः प्रतिपत्स्यन्ति मोहिता इत्यादि।

अतश्चाल्पसामर्थ्यैः पुरुषैस्तेषां देशकालवयोवस्थादिभेदभिन्नानां धर्माणां यथावज्ज्ञानानुष्ठानासम्भवाच्चतुर्वर्णानुष्ठेयं तत्तद्विशेषानादरेण सर्वसाधारणं किञ्चिद्वदेति । यत्त्वहिंसादिसाधारणधर्मप्रश्नोऽयमिति व्याख्यातं तन्न । अग्रे तेषामप्रतिपादनेनोत्तरस्य न्यूनत्वप्रसङ्गात् । तस्माद्यथोक्तमेव साधीय इति ।

ननु चतुर्वर्णधर्मप्रश्नोऽयमनुपपन्नः कलौ क्षत्रियवैश्ययोरभावात् । तथा च भागवते ।

महानन्दिसुतो राजन् शूद्रागर्भोद्भवो बली ।
महापद्म इति ख्यातो नन्दः क्षत्रविनाशकृत् ॥
ततो नृपा भविष्यन्ति शूद्रप्राया अधार्मिकाः ।
येऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः ॥
ते ऽत्र उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः ।
आरभ्य भवतो जन्म यावन्नन्दाभिषेचनमिति ॥

अत्र सामान्येन क्षत्रविनाशावगमात्परीक्षितमारभ्य नन्दपर्यन्तमेव तत्सद्भावबोधनाच्चोपरिष्टात्तदभावो गम्यते, वैश्यानां त्वनुपलब्ध्यैव तन्निश्चय इति ।

उच्यते । अत्रोपक्रमोपसंहाराभ्यां क्षत्रियाणां राज्याभावमात्रं प्रतीयते न स्वरूपाभावः । न च क्षत्रियविनाशकृदित्यनेन तत्सिद्धिः । तस्यापि ताभ्यां राज्याभावमात्रपरत्वात् । अन्यथा प्रत्यक्षविरोधापत्तेः प्रत्यक्षेणैव तदुपलब्धेः । अत एव हरिवंशे ।

वैश्याचाराश्च राजन्या धनधान्योपजीविनः ।
युगोपक्रमणे पूर्वे भविष्यन्ति द्विजातय इति ।

युगोपक्रमणे कलियुगोपक्रमणे तथैवोपक्रमात् । एवं च वैश्यानामपि गूर्जरदेशे प्रत्यक्षोपलब्धिरेव सत्तागमिकेत्यलं विस्तरेण ।

इदानीं तत्तद्विशेषविहितमसाधारणधर्मं पृच्छति ।

**चतुर्णामपि वर्णानां कर्तव्यं धर्मकोविदैः ।**
**ब्रूहि धर्मस्वरूपज्ञ सूक्ष्मं स्थूलं च विस्तरात् ॥१८॥**

विविधवादिविप्रतिपत्त्या दुर्निरूपं धर्मस्वरूपं सम्यक् जानातीति धर्मस्वरूपज्ञस्सोऽत्र सम्बोध्यते । विप्रतिपत्तिश्चेत्थं विहितनिषिद्धक्रियासाध्यावात्मगुणौ धर्माधर्माविति तार्किकाः । यो यागादिकमनुतिष्ठति तं धार्मिकमिति आचक्षत इति यागादिकमेव धर्म इति भाष्यकृतः । द्रव्यक्रियागुणादीनामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मत्वमपि तु श्रेयःसाधनतया वेदात्प्रतीयमानत्वेनेन्द्रियागोचरत्वाद्धर्मस्येति भाट्टाः । धात्वर्थसाध्यं स्वर्गादिफलसाधनमपूर्वमेव कार्यनियोगापरपर्यायो धर्म इति प्राभाकराः ।

मत्त्याऽऽर्यैः क्रियमाणं तु शंसन्त्यागमवेदिनः ।

सधर्मो यं न गर्हन्ति तं धर्मं स्वं निबोधतेति मानवाः । दुर्निरूपत्वं च महाभारते ।

अधर्मो धर्म इति च व्यवसायो न शक्यते ।

कर्तुमस्मद्विधैर्ब्रह्मन्नतो न व्यवसाम्यहमिति, धृष्टद्युम्नेनोक्तम् । राजधर्मेऽपि

न कल्माषो न कपिलो न कृष्णो न च लोहितः ।

अणीयान् क्षुरधारायाः को धर्मं वक्तुमर्हतीति ॥

एवं विप्रतिपत्तौ दुर्ज्ञेयत्वे च स्वर्गादिसाधनं शास्त्रोक्तं समधिगम्यातिशयो धर्म इति सर्वानुगतधर्मस्वरूपज्ञ चतुर्णां वर्णानां कर्तव्य धर्मकोविदैर्धर्मशास्त्रतत्त्वाभिज्ञैश्च कर्तव्यं विस्तरात्कार्त्स्न्येन सूक्ष्मं स्थूलं च द्विविधमपि धर्मं ब्रूहि तत्र चतुर्वर्णाभिप्रायेण स्थूलं धर्मकोविदाभिप्रायेण च सूक्ष्ममिति विवेकः । द्वैविध्यं च "बहुधा दृश्यते धर्मः स्थूलः सूक्ष्मो द्विजोत्तमेति" धर्मव्याधोपाख्याने प्रयोजितं तत्र लोकवेदविरोधे जायत्येव विहितः सूक्ष्मस्तदविरोधे विहितश्च स्थूल इति । सूक्ष्मश्च धर्मो द्रौपदी

द्विवाहादिः तथा च लोकविरोधे तस्मादेकस्य बहवो जाया भवन्ति नै-कस्यै बहवः सहपतय इत्यादि श्रुतिविरोधे च जायति युधिष्ठिरेण लोक-वेदविरुद्धो ऽयं धर्मो धर्मभृता वर "सूक्ष्मोधर्मो महाराज ना ऽस्य विद्मो गतिं वयमि"ति धर्मं सन्दिहानं द्रुपदम्प्रति सूक्ष्मधर्मत्वेन प्रपञ्चितः ।

एतेन प्रत्यक्षश्रुतिविरुद्धस्य कथं धर्मत्वमिति चोद्यं निरस्तम् । सूक्ष्मत्वाद्दुर्ज्ञेयत्वाच्च । सूक्ष्मो धर्मस्तत्र तत्र वक्ष्यमाणस्तथाविधो ऽल्प-प्रायश्चित्तादिः स्थूलश्च धर्मः स्नानाचमनादिः लोदाक्षमैरपि बोद्धुं योग्यः । चतुर्णां वर्णानामिति समुदितप्रश्ने ऽपि प्रत्येकं कार्यपरिसमाप्तेरसाधा-रणधर्मप्रश्न एव तात्पर्यम् । तांश्चोत्तरतः स्वयमेव स्पष्टयिष्यति । एवं च साधारणासाधारणधर्मप्रश्नद्वयेन तत्र तत्र साधारणासाधारणप्रायश्चि-त्तादिप्रतिपादनमुपपादितमिति ।

उक्तवक्ष्यमाणयोः प्रश्नोत्तरयोरसाङ्कर्यायोत्तरमवतारयति ।

**व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः ।**
**धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलं च विस्तरात् ॥**

व्यासवाक्यावसाने व्यासोक्तिसमाप्तौ मुनिमुख्यः स्थूलसूक्ष्मधर्मवि-वेचनप्रवचनकुशलः पराशरो धर्मस्य व्यासप्रश्नविषयस्य निर्णयं निर्णीयत इति निर्णयः स्वरूपं सूक्ष्मं स्थूलं च विस्तरात् कार्त्स्न्येन प्रकर्षेणोक्तिचातु-र्येणाह ।

वक्ष्यमाणधर्मतत्त्वग्रहणाय श्रोतृसावधानता विधत्ते ।

**शृणु पुत्र प्रवक्ष्यामि शृण्वन्तु मुनयस्तथा ॥ १६ ॥**

हे पुत्र पुन्नामनरकत्राणसमर्थ त्वद्बुभुत्सितं धर्ममहं प्रवक्ष्यामि तं त्वं सावधानीभूय शृणु तथा त्वया सहागता अत्रा ऽवस्थिताश्च मुनयो धर्ममननशीला अपि मया वक्ष्यमाणं धर्मं शृण्वन्तु अत्र पुत्रे मुनिषु च स्वस्य समपक्षपाततां ज्ञापयितुं मुन्युपादानं तेन मुनीनामपि व्यासं प्रति प्रश्ना-दैव लब्धोत्तरत्वमिति ।

इदानीं स्वाभिधेयधर्मस्य स्वोत्प्रेक्षामात्रमूलत्वशङ्कया वारणाय तत्प्रमातृप्रमाणानां प्रावाहिकीं नित्यतां वक्तुं सृष्टिप्रलयौ प्रपञ्चयति ।

**कल्पे कल्पे क्षयोत्पत्त्या ब्रह्मविष्णुमहेश्वराः ।**
**श्रुतिस्मृतिसदाचारनिर्णेतारश्च सर्वदा ॥ २० ॥**

कल्पते जगदस्मिन्काले इति कल्पः स च सृष्ट्यादिप्रलयान्तो जगदवस्थितिकालः स द्विविधोऽवान्तरकल्पो महाकल्पश्च तत्र चतुर्मुखस्य दिनमात्रमवान्तरकल्पः तदुक्तं कौर्म्ये

ब्राह्ममेकं महाकल्पस्तावती रात्रिरिष्यते ।
चतुर्युगसहस्रं तत्कल्पमाहुर्मनीषिण इति ।

चतुर्मुखायुःपरिमितो महाकल्पः स च ब्राह्मेण मानेन शतसंवत्सरपरिमितः परार्द्धापरपर्यायः । तदुक्तं सूतसंहितायाम्

त्रिशतैः षष्टिभिः कल्पैर्ब्रह्मणो वर्षमीरितम् ।
वर्षाणां यच्छतं तस्य तत्परार्द्धमिहोच्यते ॥
ब्रह्मणोऽन्ते मुनिश्रेष्ठ मायायां लीयते जगदिति ।

तदेषां कल्पानामनन्तत्वप्रदर्शनाय क्षयोत्पत्त्येति । तदुक्तं लैङ्गे

एवं कल्पास्तु संख्याता ब्रह्मणोऽव्यक्तजन्मनः ।
कोटिकोटिसहस्राणि कल्पानां मुनिसत्तमेति, ।

कल्पे कल्पे प्रतिकल्पं क्षयोत्पत्त्या पूर्वकल्पान्ते क्षय उत्तरकल्पादौ उत्पत्तिरिति क्षयपूर्विका उत्पत्तिः क्षयोत्पत्तिः क्षयस्य पूर्वनिर्देशश्च संसारानादित्वसूचनाय प्रेत्यभावत्वादुत्पत्तेः । नित्यनैमित्तिकप्राकृतिकात्यन्तिकचतुर्विधेषु क्षयेषु नैमित्तिकप्राकृतिकाभ्यां क्षयाभ्यां उत्पत्त्या पुनः प्रादुर्भावेन च ब्रह्मविष्णुमहेश्वराः श्रुतिस्मृतिसदाचारास्तन्निर्णेतारश्चकाराद्धर्मोऽपि सर्वदा अनाद्यन्ते संसारे उपलक्ष्यते, तत्र नैमित्तिकः क्षयोऽवान्तरकल्पान्ते ब्रह्मदिवसान्तरूपे ब्रह्मणि सुप्ते चतुर्विधभूतग्रामस्य ध्रुवलोकपर्यन्तस्य नाश उच्यते, श्रुतिर्नाम वेदः स्मृतिर्धर्मशास्त्रं सदाचारो होलाकाद्याचारस्तन्निर्णेतारो वेदशाखार्थविभागकारिणो व्यासकठकौथु-

सबौधायनाश्वलायनजैमिन्याद्याः स्मृतिनिर्णेतारो मन्वाद्या अष्टादशमूलस्मृतिकर्तारो जाबाल्यादयो अष्टादशोपस्मृतिकर्तारो वसिष्ठादयश्चैकविंशतिरिति ।

तदुक्तं ।

मनुर्बृहस्पतिर्दक्षो गौतमो ऽथ यमो ऽङ्गिराः ।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥
संवर्तोशनसौ शंखलिखितावत्रिरेव वा ।
विष्णवापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ॥
एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः ।
जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ ॥
व्यासः सनत्कुमारश्च शन्तनुर्जनकस्तथा ।
व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः ॥
बौधायनश्च काणादो विश्वामित्रस्तथैव च ।
पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ॥
वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः ।
विष्णुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः ॥
जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः ।
आत्रेयश्च गवेयश्च मरीचिर्वत्स एव वा ॥
पारस्करश्च ऋष्यशृङ्गो वै वैजवापस्तथैव च ।
इत्येते स्मृतिकर्तारो एकविंशतिरीरिता इति ।

सदाचारनिर्णेतारो होलाकाद्यनुष्ठातारस्तत्कुलवृद्धाः चकारात् पुराणोपपुराणप्रणेतारो व्यासादयो ऽपि एते सर्वे ऽपि प्रतिकल्प लीयन्ते पुनरुत्पद्यन्त इत्यर्थः । तदाह मनुः

तस्य सो ऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते ।
प्रतिबुद्धश्च सृजति मनः सदसदात्मकम् ॥

एवं स जायत्स्वप्नाभ्यामिदं सर्वं चराचरम् ।
संजीवयति चा ऽजस्रं प्रमापयति चाऽव्ययइति ।

प्राकृतस्तु लयो मायापरपर्यायायां प्रकृतौ यदा ब्रह्मादीनां लयः । तदुक्तं सूतसंहितायाम् ।

ब्रह्मणो ऽन्ते मुनिश्रेष्ठ मायायां लीयते जगत् ।
तथा विष्णुश्च रुद्रश्च प्रकृतौ विलयं गतौ ॥
ब्रह्मणश्च तथा विष्णोस्तथा रुद्रस्य सुव्रताः ।
मूर्तयो विविधास्तेषु कारणेषु लयं ययुरिति ॥

एवं लीनेषु ब्रह्मादिषु ब्रह्मायुःकालपरिमितप्रलयकालानन्तरं भगवत्सच्चिदानन्दरूपस्य सिसृक्षोत्पद्यते "सो ऽकामयत बहु स्यां प्रजायेयेति" श्रुतेः । ततो ब्रह्मविष्णुरुद्रात्मकत्वेन त्रेधा भवति तेषामाद्यो ब्रह्मा "ब्रह्मादेवानां प्रथमः संबभूवेति श्रुतेः । तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरित्यथ ह खलु चास्य राजसांशः सोऽयं ब्रह्मा ऽथ यो ह खलु चास्य तामसोंशः सोऽयं रुद्रो यो ह खलु चास्य सात्त्विकोंशः सोयं विष्णुः शर्वं एकस्त्रिधा भूत इति मैत्रश्रुतेः

एक एव शिवः साक्षात् सृष्टिस्थित्यन्तसिद्धये ।
ब्रह्मविष्णुशिवाख्याभिः कलनाभिर्व्यजृम्भत इति । स्कन्दाच्च ।

एवं सृष्टो ब्रह्मा धर्मं सृजति । तथा च श्रुतिः । स नैव व्यभवत्तच्छ्रेयो रूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्तीति । मनुरपि

सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन् इमाः प्रजाः
कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयदिति ।

तदेवं प्रतिकल्पं ब्रह्मादीनां मन्वादीनां धर्मस्य च जायमानत्वाद्वेदमपूर्वं ममैव प्रवचनमिति तात्पर्यम् ।

नन्वेव स्मृतिवत् श्रुतेरपि पौरुषेयत्वात्तन्मूलकस्मृत्याद्यभिधेयधर्मस्याप्यश्रद्धेयतैवेत्यत आह

**न कश्चिद्वेदकर्तास्ति वेदं स्मृत्वा चतुर्मुखः ।**
**तथैव धर्मान्स्मरति मनुः कल्पाऽन्तरेऽन्तरे ॥२१॥**

ईश्वरब्रह्मव्यासानां मध्ये कश्चिदपि वेदानामृगादीनां कर्त्ता वाक्यार्थज्ञानपूर्वकवाक्यरचयिता नास्त्यपि तु चतुर्मुखो ब्रह्मा ईश्वरात्पूर्वकल्पाधिगतं वेदं स्मृत्वा कल्पान्तरेन्तरे प्रतिकल्पं धर्मान्स्मरति तत्र मन्त्रार्थवादादिषु विप्रकीर्णान्वर्णाश्रमधर्मान् सङ्कलयन् पितामहप्रजापत्यादिस्मृतिरूपेणोपनिबध्नाति । व्यासस्तु केवलं राशीभूतं वेदं ऋगादिपृथक्करणेन चतुर्धा करोतीति न कस्याऽपि वेदकर्तृत्वम् । तदुक्तं मात्स्ये

अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः ।
व्यञ्जकः केवलं विप्रा नैव कर्ता न संशयः ॥
ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान्वेदान्विप्रा आत्मनि सुस्थितान् ॥
ब्रह्मणा चोदितो विष्णुर्व्यासरूपी द्विजोत्तमः ।
हिताय सर्वभूतानां वेदभेदान्करोति स इति ।

ब्रह्मणो धर्मशास्त्र[illegible] मनुराह

इदं शास्त्रं तु कृत्वाऽसौ मामेव स्वयमादितः ।
विधिवद्ग्राहयामास मरीच्यादीनहं मुनीनिति ।

यथा ब्रह्मा धर्मशास्त्रं करोति तथैव प्रतिकल्पं स्वायम्भुवो मनुरपि वेदात् धर्मान्स्मृत्वोपनिबध्नाति । मनुरिति विष्णवादीनामप्युपलक्षणम् । एतेन प्रतिमहाकल्पं प्रत्यवान्तरकल्पं च ब्रह्ममन्वादिभिः श्रुतिस्मृतिधर्माणां स्मरणप्रणयनाभ्यां प्रावाहिकी नित्यतोक्ता भवतीति । तदुक्तमाश्वमेधिके

युगेष्वावर्तमानेषु धर्मोऽप्यावर्तते पुनः ।
धर्मेष्वावर्तमानेषु लोकोऽप्यावर्तते पुनरिति ।

युगभेदधर्मवैलक्षण्यमभिप्रेत्य धर्मानिति बहुवचनात्तदेव प्रति-
जानीते

**अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे।**
**अन्ये कलियुगे नृणां युगरूपानुसारतः॥ २२॥**

कृतयुगे सत्ययुगे धर्मा वक्ष्यमाणास्तपःप्रभृतयो ऽन्ये भिन्नस्वरूपाः भिन्नचोदनाचोदितत्वाद्धर्मस्वरूपभेदे च शब्दान्तरादेरेव प्रयोजकत्वात्। तथैव त्रेतायां द्वापरे युगे कलियुगे चाऽन्ये तत्र हेतुमाह नृणां युगरूपानुसारत इति। युगस्य कृतादेः रूपं स्वरूपं चतुःसहस्रवर्षपरिमितत्वं चतुश्चरणधर्माधिष्ठितत्वादि च तदनुसारतस्तदनुसरणेन।

अयमभिसन्धिः चतुःसहस्रवर्षपरिमिते सत्ययुगे मनुष्याणां चतुर्वर्षशतान्यायुर्भवति इतरे युगे त्रेतायुगादिषु एकैकसहस्रन्यनेष्वेकैकशतन्यूनमायुर्भवति तथा कृतयुगे धर्मप्राबल्यादारोग्यादिसामर्थ्यमधिकम्। इतरेषु त्वधर्माभिभवात्सामर्थ्यन्यूनतेति। एवं च सति सर्वधर्मेषु सर्वयुगसाधारण्येन समानमधिकारं कथं मनुष्याणां चोदना ब्रूयात् सामर्थ्यरूपाधिकारिविशेषणतारतम्यात्। सिद्धं चैतत्तृतीयेऽधिकरणे। यथाविनियोगमधिकारसमर्थनात्।

अत एव मनुनापि।

चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम्।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः॥
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु।
एकापायेन वर्तन्ते सहस्राणि शतानि चेति

सर्वयुगपरिमाणमभिधाय।

चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे।
ना ऽधर्मेणागमः कश्चिन्मनुष्यान्प्रतिवर्तते॥
इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः।
चौरिकानृतमायाभिर्धर्मश्चापैति पादशः॥

अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।
कृतत्रेतादिषु ह्येषां वयो ह्रसति पादशः ॥
वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम् ।
फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम् ॥

इत्यन्तेनाधिकारिविशेषणानां सामर्थ्यादीनां तारतम्यं प्रतिपाद्य

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥
इति स्पष्टमेवोपसंहृतम् ।

तथोपकायनो ऽपि

श्रुतिश्च शौचमाचारः प्रतिकालं विभिद्यते ।
नाना धर्माः प्रवर्तन्ते मानवानां युगे युगे ॥ इति ।

यत्तु अत्राऽन्यशब्दो न धर्मस्वरूपान्यत्वऽपरो ऽपि तु प्रकारान्यत्वपरो ऽन्यथाधर्मप्रमाणचोदनानामपि प्रतियुगं भेदापत्तेः । न हीयं चोदना कृते ऽध्येतव्या इयं त्रेतायामिति व्यवस्थापकं किं चिदस्तीति, तच्चिन्त्यम् । मनुगौतमशङ्खलिखितपराशरवचनानुमितचोदनानां स्वरूपभेदभिन्नानां "कृते तु मानवा" इत्यादिवाक्येन प्रतियुगं व्यवस्थायाः प्रत्यक्षसिद्धत्वात् ।

यश्चात्र प्रकारान्यत्वे दृष्टान्तः । एकस्याप्यग्निहोत्रस्य सायम्प्रातःकालभेदेन ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति सत्यं त्वर्तेन परिषिञ्चामीति प्रातरित्यनुष्ठानप्रकारभेददर्शनं सो ऽपि विषमः । न एको धर्मः तपःप्रभृतिभिः प्रकारैर्भिद्यत इति शक्यं वक्तुं शब्दान्तरन्यायेन यागदानहोमवत्तस्य भिन्नस्वरूपत्वात् । अग्निहोत्रे तु भेदकप्रमाणाभावेन विधिनैवैकत्वावगमात् प्रकारे भेदचोदनानामपि युगभेदेन भेदापत्तिश्च तुल्यैवेत्यास्तां तावत् । तस्माद्धर्मस्वरूपभेद एव वाक्यार्थ इति ।

प्रतिज्ञातं धर्मस्वरूपभेदमुदाहरति ।

**तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।**
**द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥ २३ ॥**

तपसन्ताप इत्यस्माद्धातोर्निर्वचनेन तपःशब्देन मुख्यवृत्त्या कृच्छ्रचान्द्रायणादिभिर्देहशोषणमेवोच्यते । तदुक्तं स्कान्दे

वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः ।
शरीरशोषणं यत्तत्तप इत्युच्यते बुधैरिति ॥

यद्यपि,

कोऽहं मोक्षः कथं केन संसारं प्रतिपन्नवान् ।
इत्यभिध्यानमर्थज्ञास्तपः शंसन्ति पण्डिताः ॥
तपस्त्वाधर्मवर्तित्वं शौचं सङ्करवर्जनम् ।

एतत् खलु वा वै तप इत्याहुर्यः स्व ददातीत्यादिस्कान्दव्यासश्रुतिवाक्यैर्ज्ञानयज्ञदानानामपि तपस्त्वं गम्यते तथा ऽप्यत्र ब्राह्मणपरिव्राजकन्यायेन तदितरविषयस्तपःशब्द इति । परमत्यायाससाध्यं कठिनमित्यभिलषितफलसाधनं कृतयुगे सत्ययुगे तथा त्रेतायुगे ज्ञानं बाह्येन्द्रियवृत्तिनिरोधेनात्मदर्शनं परमुच्यते ।

यद्यपि-धर्मभेदनिरूपणप्रस्तावे ज्ञानोपन्यासो न युक्तस्तथा "ऽयं तु परमो धर्मो यद्योगेनात्मदर्शनमिति" योगिवाक्येनात्मज्ञानस्या ऽपि परमधर्मत्वप्रतिपादनान्न विरोधः । द्वापरे यज्ञमेव ज्योतिष्टोमादिकं परमाहुः । कलौ युगे दानमेव देशे काले उपायेन श्रद्धया द्रव्यस्य पात्रे प्रतिपादनमेव परमाहुः ।

तदाह मनुः

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ इति ।

परत्वं चाल्पस्य कृतयुगीयदानफलसाधकत्वेन । तदाह वृहत्पराशरः

शते तु या कृते दत्ते फलाप्तिः पुरुषस्य सा ।
दत्तैस्तु दशभिर्नृणां फलाप्तिः स्यात्कलौ युगे ॥ इति ।

नेयं परिसङ्ख्या तेन शास्त्रान्तरेण प्राप्तानामपि धर्माणामसाधारणत्वमविरुद्धम् । यथोक्तं वासिष्ठलैङ्गयोः

कृते ध्यानं तपश्चैव कर्तुं शक्यमयत्नतः ।
ज्ञानयोगौ मुनेः शक्यौ त्रेतायामप्रमादतः ॥
द्वापरे शक्यते कर्तुं यागो ऽक्लेशेन सुव्रत ।
दानमेव कलौ शक्यं कर्तुं सर्वजनैः सदा ॥ इति ।

वायवीये ऽपि

इत्याद्यानं तपस्सत्यं त्रेतायां धर्म उच्यत इति ।

बृहस्पतिना ऽप्युक्तम्

तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्थिते ।
द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया दमः ॥ इत्यादि ।

एवं प्रतियुगं धर्मव्यवस्थामभिधाय तत्प्रमाणव्यवस्थामाह ।

**कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।**
**द्वापरे शंखलिखिताः कलौ पाराशराः स्मृताः ॥२४॥**

कृते सत्ययुगे मानवा मनुप्रोक्ता धर्मास्तेन प्रोक्तमित्यण् । एवं गौतमाः गौतमप्रोक्तास्त्रेतायां द्वापरे शङ्खलिखिताः शङ्खलिखिताभ्यां सम्भूय प्रोक्ताः छान्दसो वृध्यभावः कलौ पाराशराः पराशरप्रोक्ताः स्मृतशब्दस्य द्विर्वचनं प्रत्येकं वाक्यचतुष्टये ऽपि "उपरि हि देवेभ्यो धारयतीत्यत्रैव हेतुमन्निगदेन हि शब्देन समानार्थतया प्रसिद्धवदनुवादेन विधित्वं कल्पयितुम् । तेन कलौ पाराशरधर्माः कर्तव्या इत्यर्थः सिध्यति । ततश्चानुवादमात्रमेतदिति निरस्तम् । किं तु कृतादिषु मानवादिधर्मा व्यवस्थाप्यन्ते वार्त्रघ्नीपौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामितिवत् । अत एव बृहत्पराशरेण मन्वादिधर्माणां कलावशक्यानुष्ठानत्वमुक्तम् ।

युगेषु त्रिषु ये प्रोक्ता धर्मा मन्वादिकैर्मुने ।
शक्यन्ते नैव ते कर्तुं वर्णैराश्रमवासिभिः ॥
मन्वर्थश्च स धर्माणां कृतादित्रियुगेष्वभूत् ।
धर्मं तु त्रियुगाचारं न शक्यं तु कलौ युगे ॥
मनुर्या याज्ञवल्क्यश्च धर्मिष्ठः प्राह निष्कृतिं ।
सा कृतादिषु वर्णानां सति धर्मे चतुष्पदे ॥ इति ।

ब्राह्मे ऽपि ।

यद्युगान्तर्युगे धर्मो नादर्तव्यः कलौ युगे ।
पापप्रसक्तास्तु यतः कलौ नार्य्यो नरास्तथा ॥

इत्यनादरणीयत्वमुक्तम् । न चैषां विषयभेदेन व्यवस्था साधीया। नैयायिक्यास्तस्या वाचनिकव्यवस्थातो जघन्यत्वात् । सामान्यानामेषां विशेषपरतासङ्कोचस्तु न समाधेय एव । किं च प्रतिपुरुषमनेकविषयस्फूर्तिसम्भवेन तत्तत्परतया व्यवस्थाकल्पनायामव्यवस्थितः शास्त्रार्थः स्यादित्यलं पल्लवितेन ।

नन्वेवं कलौ मानवादिधर्मा नानुष्ठेया स्युः । अनुष्ठेयत्वे ऽपि वा मन्वादिवाक्यैः पराशरवाक्यानामुपसंहारो न स्यात् । मैवं समाने विषये मन्वादिवाक्यैः पराशरस्य विरोधे व्यवस्थापकत्वात् । अन्यथैतद्व्याख्यानर्थक्यं सकलस्मृत्यन्तरवैयर्थ्यं वा स्यात् । उपसंहारस्तु प्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य न्यायस्त्वेन स्यादेव ततश्च ये धर्माः पराशरानुक्ता अपि मन्वाद्युक्ता ये वा तुल्यरूपा समान्यविशेषरूपा वा तेषामविरुद्धत्वेनोपसंहारेण चानुष्ठेयता सिध्यत्येव कलावपीति सर्वमनवद्यम् । तदाह बृहत्पराशरः

कृते तु मानवा धर्मास्त्रेतायां गौतमस्य च ।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥ इति ।

प्रतियुगं धर्मतत्प्रमाणव्यवस्थावदधर्मजनकस्थानहानव्यवस्थामप्याह ।

**त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।**
**द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥ २५ ॥**

पतितपुरुषयुक्तं देशमेकराजाज्ञावशवर्तिग्रामसमूहं कृतयुगे त्यजेत् कृतयुगसामर्थ्यादधर्मसंक्रमभयेन । त्रेतायां तादृशमेव ग्रामं विप्रतद्भृत्यशूद्रवासम् । अनेकजातीयनानावृत्युपजीविबहुजननिवासस्थानं नगरं वा ।

विप्राश्च विप्रभृत्याश्च यत्र वै निवसन्ति ते ।
स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च ॥

पण्यक्रयादिनिपुणैश्चातुर्वर्ण्यैस्तु यद्युतम् ।
अनेकजातिसम्बद्धं नैकशिल्पिसमाकुलम् ॥
सर्वदैवतसम्बद्धं नगरं त्वभिधीयते ।

इति भृगुप्रोक्तलक्षणमुत्सृजेत् । द्वापरे पतितपुरुषयुक्तमेकं कुलं तत्सपिण्डवर्गं त्यजेत् कुलत्यागो नाम पतितकुलमर्यादित्यर्थः ।

नन्वत्र कृतादिक्रमेण कर्तृकुलग्रामदेशत्यागा वक्तव्या धर्मप्राबल्येनाधर्मदौर्बल्यात् । तथा हि यत्र चतुष्पात्सकलो धर्मस्तत्रा ऽधर्मस्यैकपात्त्वेन कर्तृमात्रनिष्ठतया सकलदेशाभिभावकत्वं न सम्भवतीति कर्तृमात्रत्याग उचितो यत्र पुनरधर्मश्चतुष्पाद्धर्मश्चैकपात्तत्र धर्मस्य कर्तृमात्रनिष्ठतया ऽधर्मस्य सकलदेशव्यापकत्वसम्भवाद् देशत्याग उचित एवं त्रेताद्वापरयोरपि तत्कथमुच्यते कृते देशत्यागः कलौ कर्तृत्याग इत्यादि ।

उच्यते । नात्र धर्माधर्मयोः प्रबलदुर्बलभावो देशादित्यागे प्रयोजकः किन्तु शक्यशक्ती । तथा हि कृते पतितपुरुषाक्रान्तदेशपरिहारे देशान्तरस्यातथाविधस्योपलब्धिः सम्भवतीति देशत्यागः शक्यते कर्तुं कलौ तु पतितप्रायपुरुषाक्रान्तत्वात्सकलदेशस्य त्यागो ऽशक्य एवेति कर्तृमात्रत्यागो विधीयते । नन्वेकस्य पातित्ये देशादीनां त्यागः कथं तेषामकर्तृत्वेनासंसर्गित्वेन च पातित्यनिमित्ताभावात्संसर्गे तु वाक्यान्तरेणैव वर्जनादिति चेत् सत्यम् । देशादित्यागे संसर्गप्रकारेष्वपरिगणितस्यापि तद्देशवासादेरनेनैव वाक्येन तत्तद्युगेष्वसाधारण्येन संसर्गप्रकारत्वं बोध्यत इति कल्प्यते । अन्यथा ऽदृष्टार्थतादेशत्यागादीनां स्यात् । वक्ष्यति च कृते सम्भाषणादेवेत्यादि तस्मात्सुष्ठूक्तं त्यजेद्देशमित्यादि ।

तदाह बृहत्पराशरः ।

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥ इति ।

देशादित्यागे हेतुरुक्तः पाद्मे ।

देशारामकुलानि स्युः पापभाञ्जि कृतादिषु ।
कलौ तु केवलं कर्ता भाजनं पुण्यपापयोः ॥ इति ।

प्रतियुगमधर्मजनकस्थानहानव्यवस्थावदधर्मजनकत्याज्यनिमित्त-व्यवस्थामाह ।

**कृते सम्भाषणादेव त्रेतायां स्पर्शनेन च ।**
**द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥ २६ ॥**

कृते कृतयुगे पतितस्य संभाषणात्प्रीत्या परस्पराभिलापात्पतति एवकारो व्यवस्थापोद्बलनार्थः । न कर्मव्युदासार्थः । तस्य चतुर्ष्वऽपि युगेषु पातकत्वात् । त्रेतायां स्पर्शनेन परस्परमङ्गसंपर्केण चकारो ऽप्येवकारार्थे । द्वापरे त्वन्नमादाय पतितस्वामिकान्नभोजनेन कलौ कर्मणैव निषिद्धेन ब्रह्महत्यादिना पतति द्विजातिकर्मानर्हो भवति । कृतादिषु सम्भाषणादिव्यवस्थापनस्य कलावपरिहार्यत्वमभिप्रेत्य परिहार्ये तु कथंचित्कर्मेति तावन्मात्रप्रतिषेधः । कर्मशब्दोपादानसामर्थ्यान्मानसवाचिकव्यापारयोः कलावपातकत्वं ध्वनितम् । तथा च भागवते ।

नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक् ।
कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् ॥ इति ।

सारङ्गवत्सारग्राही राजा परीक्षित्कलिं न जघान यतो ऽस्मिन्कुशलानि पुण्यानि मनसा वचसा च कृतानि सिध्यन्ति नेतराण्यकुशलान्यपुण्यानि यतस्तानि कृतान्येव कायिकव्यापारविषयाण्येव सिध्यन्तीत्यर्थः । एतेन पूर्वोक्तेषु देशादित्यागेष्वप्येतानि निमित्तानि दर्शितानि यथा कृते सम्भाषणमात्रात्पातित्य, तच्चैकदेशवासे ऽवश्यम्भावीति देशस्यैव त्यागः । त्रेतायां स्पर्शनं स च एकग्रामवासेऽवश्य भावीति ग्रामस्यैव त्यागः । द्वापरे त्वन्नभोजनेन, तच्चैककुलवासेऽवश्यम्भावीति कुलस्यैव त्यागः । कलौ तु कर्मणैवेति कर्तृमात्रत्याग इति । तदाह बृहत्पराशरः ।

कृते सम्भाष्य पतति त्रेतायां स्पर्शनेन तु ।
द्वापरे भक्षणे ऽन्नस्य कलौ पतति कर्मणा ॥ इति ।

एतेन शास्त्रफले प्रयोक्तरीतिन्यायेनाकर्तरि देशादौ पापसम्भवो न सम्भवतीति चोद्यं निरस्तम् । सम्भाषणादीनां पापहेतूनां सम्भवात् ।

ननु चतुर्णामेव निमित्तानां युगचतुष्टये व्यवस्थापने

संलापस्पर्शनिश्वाससहयानासनाशनात् ।

याजनाध्यापनाद्यौनात्पापं सङ्क्रमते नृणाम् ॥

इत्यादिवाक्यैर्निमित्तान्तरपरिगणनमनर्थकं स्यादिति चेन्न । तेषां संवत्सरान्त पातित्यापादकत्वात् मूलवचनोक्तानां तु कृतादिषु सद्यःपातित्यजनकत्वात् सद्यःपातित्यहेतुकर्मसाहचर्यात् । तथा च सम्भाषणादिभिः कलौ न सद्यः पातित्यं कृतादिष्विव किं तु कर्मणैव । सम्भाषणादिभिस्तु संवत्सरान्ते ऽपि कलौ न पातित्यं किं तु पतिततुल्यतामात्रम् । "भवेदूर्ध्वं तु तत्समम्" इति वक्ष्यमाणत्वात् ।

एते महापातकिनस्तत्संसर्गी च पञ्चमः ।

एतैः सह समायोगं यः करोति दिने दिने ॥

तुल्यतां याति सो ऽप्याशु कलौ संवत्सरे गते ।

इति पाद्मवाक्याच्च । न चैतावतैव पातित्यं गम्यते, राजसमो मन्त्रीति वत्तत्साम्यबोधकत्वे ऽपि तत्त्वानवबोधकत्वात् ॥

अत एव "संसर्गदोषः पापेष्विति" संसर्गदोषाभावः कलिवर्ज्यप्रकरणेऽभिहितः सङ्गच्छते । न चैवं संसर्गमाचरन्विप्र इत्यादिना अग्रे प्रायश्चित्ताभिधानमसङ्गतमिति वाच्यम् । तस्य संसर्गोत्पन्नपापविषयत्वेन पातित्यविषयत्वाभावात् । दोषः पातित्यं "भवेदूर्ध्वं तु तत्समम्" इति साम्याभिधाने ऽपि तत्प्रायश्चित्तानभिधानाच्च । तच्च तत्रैव यथासम्भवं व्याख्यास्यते । न च कर्मणः सर्वत्रा ऽपि सद्यःपातकत्वेन कलाविति व्यर्थम् । अन्यत्र सम्भाषणादेस्तस्य च सद्यःपातकत्वं कलौ तु केवलस्यैवेत्यर्थात् । तस्मात्कलौ कर्मणैव सद्यःपातित्यं न संसर्गेण यौनादिना ऽपि ।

न च यौनस्रौवमौख्यैः सद्यः पततीति विष्णुवाक्यविरोधः । तेषां कृतविषयमुखसम्भवसम्भाषणाध्यापनसाहचर्येण कृतादिविषयत्वात् । तथा हि मुख्यस्य मुखसम्भवाप्ताध्यापनस्य सम्भाषणत्वेन सम्भाषणेऽन्तर्भावः । यौनस्य मैथुनस्य योनिलिङ्गस्पर्शत्वेन स्पर्शेऽन्तर्भावः । स्रौवस्य याजनस्य पुरोडाशादिभक्षणत्वेनाशनेऽन्तर्भाव इति सर्वं सुस्थम् ।

इदानीं अवज्ञातमहापुरुषादिशापपरिपाकहेतुकालव्यवस्थामाह ।

**कृते तात्क्षणिकः शापस्त्रेतायां दशभिर्दिनैः ।**
**द्वापरे चैकमासेन कलौ संवत्सरेण तु ॥ २७ ॥**

कृतयुगे तात्त्वणिकः स एव त्तणः तत् त्तणं तन्त्तणे भवस्तात्त्वणिकः शापः शापपरिपाको अनिष्टाशंसनं, त्रेताया दशभिर्दिनैरहोरात्रैः, द्वापरे तु एकेन मासेन त्रिंशद्दिनसमूहेन, कलौ संवत्सरेण द्वादशमाससमूहेन भवतीति । अयमर्थः कृते धर्मस्य प्राबल्येन शप्तुः परानिष्टविषयिणी वाक्सिद्धिस्तत्कालमेव भवति कलौ तु धर्मदौर्बल्यात्संवत्सरेणेति । एवं त्रेताद्वापरयोरपि योज्यम् ।

तदाह बृहत्पराशरः ।

कृते तात्त्वणिकः शापस्त्रेतायां दशभिर्दिनैः ।
मासेन द्वापरे ज्ञेयः कलौ संवत्सरेण तु ॥ इति ।

शाप इत्याशीर्वादस्याऽप्युपलक्षणं न्यायसाम्यात् ।

ननु

यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन च ।
द्वापरे यच्च मासेन अहोरात्रेण तत्कलौ ॥
तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः ।
प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम् ॥

इत्यादिवैष्णवादिवाक्यैः कलौ धर्मस्याशुफलत्वप्रतिपादनात्कथमुच्यते संवत्सरेण शापपरिपाक इति । सत्यम् । कृतादिषु विलम्बेन फलजनकत्वमधर्मानभिभवात् । कलौ त्वविलम्बेन धर्मोत्पत्तावपि विलम्बेन फलत्वाभिधानात् । तदेतत्तत्रैवोक्तम् ।

धर्मसंसाधने क्लेशो द्विजातीनां कृतादिषु ।
अल्पेनैव प्रयत्नेन धर्मः सिध्यति वै कलौ ॥
धर्मोत्कर्षमतीवाशु प्राप्नोति पुरुषः कलौ ।
स्वल्पायासेन धर्मज्ञास्तेन तुष्टोऽस्म्यहं कलेरिति ॥

यद्वा विवादे सत्यासत्यनिर्णायकशपथपरिपाककालव्यवस्थामाह ।

शापः शपनं शपथ इति यावत् । "शपनं शपथः पुमानि"ति कोशात् स च विवादे सत्यासत्यनिर्णयाय देवतादिस्पर्शनम्, तत् कृते तत्क्षणमेव निर्णायकम् । त्रेताया दशभिर्दिनैर्द्वापरे मासमात्रेण कलौ संवत्सरेण ।

कलौ द्वादशभिर्मासैः शपथः परिपच्यते । इति वायुपुराणात् ।

यत्तु कोशपानस्य शपथत्वे ऽपि चतुर्दशभिर्दिनैर्निर्णायकत्वम् ।

अर्वाक्चतुर्दशादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥

इति योगीश्वरादिभिरुक्तं तत्कृतादिषु कोशपानमात्रविषयम् । न शपथान्तरविषयम् । कोशपानं तु भक्तस्येव तस्याभिधानात् । याज्ञवल्क्यादिस्मृतेर्युगान्तरविषयत्वाच्च ।

उक्तं च

कृते तु मानवा धर्मा इति ।
मनुर्या याज्ञवल्क्यश्च वसिष्ठः प्राह निष्कृतिं ।
सा कृतादिषु वर्णानां सति धर्मे चतुष्पदे ॥ इति बृहत्पाराशरीयाच्च ।

दानमेव कलौ परमित्युक्तं तत्र गुणतारतम्येन फलतारतम्यं वक्तुं तदेव तावद्विभजते ।

**अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ।**
**द्वापरे याचमानाय सेवया दीयते कलौ ॥ २८ ॥**

कृते अभिगम्य प्रतिग्रहीतृसकाशं गत्वा दानं क्रियते त्रेतासु बहुवचनं पाठबहुत्ववत्कृतद्वापरादिषु वा जातावेकवचनम् । प्रतिग्रहीतारमाहूय तस्मै दीयते द्वापरे स्वयमेवागत्य मह्यं इदं देहीति याचमानाय प्रतिग्रहीत्रे दीयते कलौ सेवया तदाज्ञाकरणेन दीयते । अत्र वर्तमानापदेशाद्युगप्रभावकथनमात्रं मतं न तु दानगुणव्यवस्थापनम् । अन्यथा सेवादानस्यातिनिष्फलतोपसंहाराद्बुद्धिविरोधः स्यात् तदाह बृहस्पतिः

कृते प्रदीयते गत्वा त्रेतास्वानीयते गृहे ।
द्वापरे च प्रार्थयतः कलावनुगमान्विते ॥

बृहत्पराशरोऽपि ।

अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ।
द्वापरे याचमाने तु कलौ सेवाय दीयते ॥

इदानीं तत्फलतारतम्यमाह ।

**अभिगम्योत्तमं दानमाहूयैव तु मध्यमम् ।**
**अधमं याचमानाय सेवादानं तु निष्फलम् ॥ २९ ॥**

अभिगम्य यद्दानं तदुत्तममनन्तफलम् । आहूय यद्दानन्तन्मध्यमं सहस्रगुणफलं याचमानाय यद्दानं तदधमं पञ्चशतगुणफलं सेवादानं तु निष्फलं फलाजनकमिति ।

तदुक्तं पुराणसारे ।

गत्वा प्रदीयते दानं तदनन्तफलं स्मृतम् ।
सहस्रगुणमाहूय याचितं तु तदर्द्धकम् ॥
अभिगम्य तु यद्दानं यद्वा दानमयाचितम् ।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते ॥ इति ।

यद्यपि "याचिते नाऽपि दातव्यं श्रद्धापूतं तु शक्तितः" इति योगिवाक्येन याचितेऽपि दानमुक्तम् । तथाऽपि याचितेन श्रद्धापगमे सति यद्दानं तदधममिति द्रष्टव्यम् । श्रद्धापूतमिति वचनात् । यद्यपि सेवादानं न सर्वात्मना निष्फलं तस्य तामसत्वेन तिर्यग्योन्युपभोग्यत्वात् । तथापि ऐहिकामुष्मिकफलहेतुत्वाभावान्निष्फलमिति ।

तदुक्तं गीतासु

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥

विष्णुधर्मोत्तरे ।

तामसानां फलं भुङ्क्ते तिर्यक्त्वे मानवः सदेति ।

स्कान्देऽपि वृथादानान्युपक्रम्य

"परिचारकाय भृत्याय मर्वस्य पिशुनाय च ।
इत्येतानि च राजेन्द्र वृथा दानानि षोडश" ॥ इति ॥

अभिगम्य दानस्योत्तमत्वाभिधानं सेवादानस्य निष्फलत्वाभिधानं चानुष्ठेयत्वाननुष्ठेयत्वप्रतिपादनाय।

तदाह बृहत्पराशरः

अभिगम्योत्तमं दानमाहूतं चैव मध्यमम्।
अधमं याचमानं स्यात्सेवादानं तु निष्फलमिति॥

कृतादिषु धर्मभेदे नृणां युगरूपानुसरणं हेतुरुक्तस्तत्र प्रस्तुतत्वात्कलिस्वरूपं विशेषतः प्रपञ्चयति।

**जितो धर्मो ह्यधर्मेण सत्यं चैवानृतेन च।**
**जिताश्चोरैश्च राजानः स्त्रीभिश्च पुरुषाः कलौ॥३०॥**

धर्मो विध्यर्थः सन्ध्यास्नानादिरधर्मेण तत्कालनिषिद्धेन निद्रालस्यादिना जितोऽभिभूतः सत्यं साक्षिसभ्यादिवाक्येषु अनृतेन मिथ्यावचनेन तिरस्कृतं चोरैः परस्वापहारतत्परै राजानोऽन्यायमार्गानुवर्तिनो जितास्तिरस्कृताः स्त्रीभिर्गृहिणीभिर्गृहकार्यचर्चायां पुरुषाः पराभूताः। यद्वा-स्त्रीभिः स्वपरसाधारणीभिः स्वविषये धैर्यप्रच्यावनेनाभिभूताः पुरुषाः। अत्र धर्मादीनामभिभवकथनेन दुर्बलत्वमधर्मादीनां चाभिभावकत्वकथनेन प्रबलत्वमुक्तम्।

तदाह बृहस्पतिः

तिष्ठेऽधर्मस्त्रिभिः पादैर्धर्मः पादेन संस्थितः॥ इति।

बृहत्पराशरेऽपि

धर्मश्च सत्यमायुश्च तुर्यांशेन कलौ युगे।
पुरुषाश्च जितास्त्रीभि. राजानो दस्युभिर्जिताः।
जितो धर्मश्च पापेन अनृतेन तथा ऋतमिति॥

किं च।

**सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति।**
**कुमार्यश्च प्रसूयन्ते अस्मिन्कलियुगे सदा॥३१॥**

अग्निहोत्रस्य नित्यत्वात्तदुत्सादो निन्दातिशयनिमित्तम्।

ननु

अग्निहोत्रं गवालम्भं सन्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इत्यनेन अग्निहोत्रस्य कलौ निषेधात्कथं तदभावोऽनिन्दानिमित्तम् । उच्यते । गोनराश्वमेधानामग्निहोत्रानन्तरभाविनां निषेधानुपपत्तिरेवाग्निहोत्रस्य कलौ गमिका तदभावे तेषामप्राप्यत्वात् । तथा अग्निहोत्रहवणीलेहस्य लिठापरिग्रहस्य सौत्रामण्यां सुराग्रहस्य सत्रदीक्षाया विप्राणां शामित्रसोमविक्रययोः निषेधश्च कलावग्निहोत्राभावे नोपपद्येत । तस्माद्विशेषनिषेधः सामान्याभ्यनुज्ञानार्थ इति न्यायादस्त्यग्निहोत्र कलौ । न चेदं लिङ्गं निषेधश्रुतेर्न बाधकमिति वाच्यम् । तयोः कलिपूर्वापरभागविषयत्वेन विषयभेदकल्पनायानुपपत्तिः । तथा हि । द्विविधं तावदग्निहोत्रं सर्वाधानेनार्द्धानेन च । तत्र सर्वाधानेन चतुश्चत्वारिंशच्छतवर्षपर्यन्तमेव कार्यं नोपरिष्टात् ।

तथाह व्यासः ।

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः ॥
सन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता ॥ इति ।

अत्र त्रेतापरिग्रह इति वदन्सर्वाधानमेवाभिप्रेतवान् ।

अत एव लौगाक्षिः

अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योश्च पृथक्कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रितेति ।

युगस्य पूर्वं पूर्वयुगं कलिपूर्वभाग इति व्याख्येयम् । अन्यथा व्यासवाक्याद्विच्छिन्नमूलत्वापत्तेः । अर्धाधानं तु यावद्वर्णवेदविभागं कार्यम् ।

तदाह देवलः

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ।
सन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे ॥ इति ।

नन्विदमनुवादकं न व्यवस्थापकं वैदिककर्मणो वर्णवेदसाध्यत्वेन तदभावेऽर्थत एव तन्निवृत्तेः । मैवम् । तात्पर्यानवगमात् । तथा हि

वर्णानां विभागो नाम योनिवृत्तिधर्मलिङ्गसंकरानपगमाभ्यां यथावस्थितत्वम् । वेदप्रवृत्तिश्चानुष्ठीयमानं पदार्थाभिप्रायकश्रुत्यनुसन्धानसामर्थ्यं तदुभयं यावत्तावदग्निहोत्राद्यनुष्ठेयं नोपरिष्टादित्यर्थः । यद्यग्निहोत्रं सामान्येनोपात्त तथा ऽपि सर्वाधानव्यवस्थापकाविरोधेनार्धाधानं विवक्षितमित्यलमतिप्रपञ्चेन ।

एतेन सन्यासे ऽपि विवादः पराकृतः । अत एव–

–"यतेस्तु सर्ववर्णेषु भिक्षाचर्याविधानत" इत्यनेन यतेः सार्ववर्णिकभिक्षाप्रतिषेधः कलिवर्ज्येषु संन्यासाश्रमे लिङ्गम् । व्यवस्थाद्वयं तु त्रिदण्डैकदण्डाभिप्रायेणेति ज्ञेयम् ।

अग्निहोत्राणि इति बहुवचनादन्यान्यपि श्रौतस्मार्तकर्माणि सीदन्ति नश्यन्ति ।

तथा च महाभारते

यज्ञे प्रतिनिधिः पार्थ दाने प्रतिनिधिस्तथा ।
व्रते प्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते ॥
निवृत्तयज्ञस्वाध्यायाः स्थालीपाकविवर्जिताः ।
ब्राह्मणाः सर्वभक्ष्याश्च भवन्तीह गते युगे ॥

गुरूणां पितृश्वश्र्वादीना पूजा अलघनीयता प्रणश्यति ।

तथा च मात्स्ये ऽपि

पितॄन् पुत्रा नियोत्स्यन्ति वध्वः श्वश्रूश्च कर्मणा ।
वाक्शरैस्तर्जयिष्यन्ति गुरुं शिष्यास्तथैव च ॥

भारते ऽपि

न द्रक्ष्यति पिता पुत्रं पुत्रश्च पितरं तथा ।
भार्या च पतिशुश्रूषां करिष्यति कदा च नेति ॥

कुमार्यः कन्याः कुमाराश्च प्रसूयन्ते प्रजनयन्ति ।

तथा च भारते ।

पञ्चमेवाथ षष्ठे वा वर्षे कन्या प्रसूयते ।
सप्तवर्षाष्टवर्षाश्च प्रजानिष्यन्ति वै नराः ॥

सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप ।
दशद्वादशवर्षाणां पुंसां पुत्रा भवन्ति च ॥ इति ।

अस्मिन्वर्तमाने कलियुगे सदा कल्पान्तरवर्तिनि च कलियुगे ऽप्येषैव स्थितिः ।

तदुक्तं विष्णुपुराणे

यदा यदा सतां हानिर्वेदमार्गानुसारिणाम् ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥

भारते ऽपि ।

यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ इति ।

यद्वेदमेवं व्याख्येयम् । सीदन्ति चाग्निहोत्राणीत्यत्र वर्तमानापदेशेन भाव्यव्यापारमात्रं प्रतीयते । तस्य च भावकव्यापारमृते अन्यथाऽनुपपत्त्या भावकव्यापारः कल्प्यते । अष्टाकपालो भवतीत्यादिवत् । तथा च त्रैवर्णिकाः कलावग्निहोत्राणि सादयेयुरित्यर्थः सिध्यति । उक्तं च अग्निहोत्रं गवालम्भमित्यादि पूर्वादाहृतवचनं तस्य च व्यवस्था पूर्वोदाहृतैव । तथा गुरुपूजा प्रणश्यति इत्यत्रा ऽपि प्रयोज्यव्यापारेण प्रयोजकव्यापारकल्पनावश्यम्भावाद्गुरुपूजा प्रणाशयेदित्यर्थः सिध्यति । तदुक्तं कलिवर्ज्यप्रकरणे दक्षिणा विधिचोदितेति । विधिचोदिता च दक्षिणा "गुरवे तु वरं दत्त्वे"त्यादिना विहिता । तथा कुमार्यश्च प्रसूयन्ते इत्यत्रापि कुमारीः प्रसावयेदित्यर्थः सिध्यति । तथा च निरुक्ते स्त्रीणां दानविक्रयातिसर्गाः विद्यन्ते न पुंसः पुंसो ऽपीत्येके शौनःशेपे दर्शनात् । दृश्यते च स्त्रीमण्डले मल्पालदेशे ज्येष्ठकन्यापुत्रयोरपि विवाहः । अन्येषामतिसर्गः । सोऽपि निषिद्धः कलिवर्ज्यप्रकरणे बृहन्नारदीये । द्विजानामसवर्णासु कन्यासूपगतं तथेति । असवर्णासूपगमस्तथा इत्यन्वयः । न च असवर्णास्विति कन्याविशेषणम् । सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपीति असवर्णासु कन्यासु उपगतं तथेति । असवर्णासूपगमनस्याधिक-

निषेधात् । तथा चात्रप्रशब्दोऽपि निषेधार्थः सिध्यति । तत्रप्रस्मर्तव्यमिति शबरस्वामिना प्रशब्दस्य निषेधार्थकत्वप्रगटनादित्यलम् ।

यदुक्तं तपः परं कृतयुग इत्यादि, तत्र हेतुमाह ।

**कृते त्वस्थि गताः प्राणास्त्रेतायां मांसमाश्रिताः ।**
**द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः ॥ ३२ ॥**

प्राणाः पञ्चापि वायवः प्राणापानसमानोदानव्यानाः हृदयादिस्थानस्थितास्ते कृते अस्थ्यन्तर्वर्तिनो यावदस्थ्यव्याकुला त्रेतायां यावन्मांसं द्वापरे च यावद्रुधिरं कलौ तु यावदन्नोपभोगं आदिशब्दात्पानीयपानं च यावत् । तावत्स्थिता अव्याकुलाः चक्षुरादीन्द्रियाणि अपि प्राणाधीनव्यापारत्वात् प्राणशब्देनोपलक्ष्यन्ते न वै वाचो न चक्षूंषि श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाचक्षत इति छान्दोग्यश्रुतेः । तान्यपि यावदस्थ्याद्यव्याकुलानीति तथाच कृते कृच्छ्रादितपसा मांसाद्युपक्षयेऽप्यस्थ्नामनुपक्षयादव्याकुलप्राणतया तपस्सिद्धिर्न त्रेतायां, तत्र बाह्येन्द्रियवृत्तिनिरोधेन रुधिराद्विद्ववधातुक्षयेऽपि न मांसोपक्षय इत्यव्याकुलप्राणतया ज्ञानसिद्धिर्न द्वापरे तत्र तु यागीयव्रतपानेनान्नत्यागेऽपि न रुधिरक्षय इति यागसिद्धिर्न कलौ कलौ त्वन्नापरिहारेणापि दानसिद्धिरिति सर्वयुगेषु प्राणाधाराबाधेन धर्मानुष्ठानं प्रदर्शितम् । तत्र तपसो मांसोपशोषकत्वमुक्तं स्कान्दे

वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः ।
शरीरशोषणं यत्तत्तप इत्युच्यते बुधैरिति ॥

इन्द्रियनिरोधस्य रुधिरोपशोषकत्वमुक्तमुत्तरगीतासु ।

इन्द्रियाणां निरोधेन देहे नश्यन्ति धातवः ।
देहे नष्टे कुतो बुद्धिर्बुद्धिनष्टे कुतो ज्ञतेति ॥

यागे दीक्षितस्यान्नत्याग उक्तः कल्पकारैः पीवा दीक्षते कृशो यजेतेति यदा ऽस्य चक्षुषो कृष्णं नश्यत्यथ सुमेध्यो भवतीति च । कलौ तु दानेषु नात्यन्तिको ऽन्नत्यागो ऽङ्गमिति न दानेषु प्राणपीडा ततश्च उत्तरोत्तर-

युगेषु पूर्वपूर्वयुगधर्मानुष्ठानमशक्यमेव पूर्वपूर्वयुगेषु तूत्तरोत्तरयुगधर्मा अपि स्वनुष्ठेया इति सर्वं सुस्थम् ।

तदाह बृहत्पराशरः ।

कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमेव च ।
द्वापरे रुधिरं यावत्कलावन्नाद्यमेव त्विति ॥

नन्वेवं धर्मे सत्यग्निहोत्रादिरहितेषु द्विजेषु कलिधर्मा दानादयोऽपि कथं साङ्गाः स्युः तेषामपि दातृदेययात्रादिशुद्ध्यधीनत्वादित्यत आह ।

**युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः ।**
**तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ॥ ३३ ॥**

युगे युगे प्रतियुगं ये धर्मा गवालम्भनविधवानियोजनादयः कृतयुगादौ, स्वयं कर्षणवेदैकदेशाध्ययनादयश्च कलौ तत्र तत्र युगे तदनुष्ठातारो ये द्विजाश्च ब्राह्मणक्षत्रियवैश्याश्चकाराच्छूद्रादयोऽपि तेषां धर्मिणां द्विजानां च निन्दा अधर्माभासत्वोद्भावनेन दोषकीर्तनं न कर्तव्यं तत्तद्युगविहितत्वेन वास्तवाधर्मत्वाभावात्तदेवाह हि यतस्ते धर्माः द्विजाश्च युगरूपास्तत्तद्युगानुरूपाः वीप्सायां पुनर्वचनं प्रतियुगं धर्मवैलक्षण्यवद् द्विजातीनामपि धर्मवैलक्षण्यप्रतिपादनाय तच्च सर्ववर्णकन्यापरिणयेन युगान्तरे स्पष्टमेव मूर्धावसिक्तादीनामपि द्विजत्वात् ।

तदुक्तमारण्यके ।

भूमिर्नद्यो नगाः शैलाः सिद्धा देवर्षयस्तथा ।
कालेन सह वर्तन्ते तथा भावा युगे युगे ॥
कालं कालं समासाद्य नराणां नरपुङ्गव ।
बलवर्ष्मप्रभावा हि प्रणश्यन्त्युद्भवन्ति चेति ॥

वर्ष्म शरीरं प्रभावो धर्मातिशयः । इदमत्रोक्तम् । यथा कृतादौ गवालम्भादिधर्माणां लोकविरोधेऽपि व्यासादिद्विजानां वानेकनिषिद्धानुष्ठातृत्वेऽपि न निन्दा प्रभावाधिक्येन तत्कालानुरूपत्वात् । तदुक्तमापस्तम्बेन ।

तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जन इति ॥

तथा कलिधर्माणामपि स्वयङ्कर्षणवेदैकदेशाध्ययनादीनां तदनुष्ठातॄणां द्विजानां च निन्दा न कार्या अल्पप्रभावत्वे न कलिकालानुरूपत्वादिति ।

तदाह बृहत्पराशरः ।

युगे युगे तु ये धर्मास्तेषु धर्मेषु ये द्विजाः ।
ते द्विजानावमन्तव्या युगरूपा द्विजोत्तमाः ॥ इति ।

यतो युगरूपा इति हेतुरत एव युगाननुरूपा धर्मा द्विजाश्च प्रतिषिद्धाः ।

ब्रह्मपुराणे

दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः ।
गोत्रान्मातृसपिण्डाच्च विवाहो गोवधस्तथा ॥
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः ।

तथा

देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुरिति ॥

बृहन्नारदीये ऽपि ।

समुद्रयातुः स्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपगतं तथा ॥
देवराच्च सुतोत्पत्तिः मधुपर्के पशोर्वधः ।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ।
दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥
महाप्रस्थानगमनं गोमेधश्च तथा मखः ।
इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिण इति ॥

शौनकीये धर्मज्ञसमये ऽपि ।

विहितान्यपि कर्माणि धर्मलोपभयाद्बुधैः ।
समापने निवृत्तानि साध्वभावात्कलौ युगे ॥

विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः ॥
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।
आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ॥
द्विजस्याब्धौ तु नैयातुः शोधितस्या ऽपि संग्रहः ।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥
महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे ।
सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः ॥
अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः ।
वानप्रस्थाश्रमस्या ऽपि प्रवेशो विधिबोधितः ॥
वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ।
प्रायश्चित्तविधान च विप्राणां मरणान्तिकम् ॥
संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः ।
वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ।
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ॥
सर्वेणान्याङ्गनादुष्टैः ससर्गः शोधितैरपि ।
अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः ॥
परोद्देशात्मसन्त्याग उच्छिष्टस्या ऽपि वर्जनम् ।
प्रतिमाभ्यर्चनार्थाय सङ्कल्पश्च सधर्मकः ॥
अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ।
शामित्रं चैव विप्राणां सोमविक्रयणं तथा ॥
षड्भक्तानशनेनान्नहरणं हीनकर्मणः ।
शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् ॥
भोज्यान्नता गृहस्थस्य तीर्थसेवाऽतिदूरतः ।
शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशालिता ॥
आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनतया तथा ।
प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः ॥
ब्राह्मणानां प्रवासित्व मुखाग्निधमनक्रिया ।
बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः ॥
यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः ।

नवोदके दशाहं च दक्षिणा विधिचोदिता ॥
ब्राह्मणादिषु शूद्रस्य पचनादिक्रिया ऽपि च ।
भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा ॥
गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया ।
पितापुत्रविरोधेषु साक्षिणे दण्डकल्पनम् ॥
यत्र सायं गृहत्वं च मुनिभिस्तत्त्वतत्परैः ।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥
निवर्त्तितानि कर्माणि व्यवस्थापूर्वक बुधैः ।
समयश्चा ऽपि साधूना प्रमाण वेदवद्भवेदिति ॥

अन्यत्रा ऽपि पुराणे ।

उढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुमिति ॥

निगमे ऽपि ।

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेदिति ॥

स्मृत्यन्तरे ऽपि ।

देवराच्च सुतोत्पत्तिः गोमेधं च कमण्डलुम् ।
अक्षतां पौरुषं मेधं कलौ पञ्च विवर्जयेत् ॥

ब्रह्मपुराणे ऽपि ।

स्त्रीणां पुनर्विवाहश्च देवरात्पुत्रसन्ततिः ।
स्वातन्त्र्य वा कलियुगे न कर्तव्यं कदाचन ॥

क्रतुरपि ।

देवरेण सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः ॥

बौधायनो ऽपि ।

विधिर्यो निश्चितः पूर्वं क्रियते नेह साम्प्रतम् ।
पुरा कल्पे स एतच्च विधवाया नियोजनम् ॥

हेमाद्रौ ।

यथा नियोगजो धर्मो नानुबन्ध्या वधो ऽपि च ।
तथोद्वारविभागो ऽपि नैव सम्प्रति वर्तते ॥

अन्यत्रा ऽपि ।

अग्निहोत्रं गवालम्भं सन्यासं पलपैतृकम् ।
देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

ब्रह्मपुराणे ऽपि ।

शपथाः शकुनाः स्वप्नाः सामुद्रिकमुपश्रुतिः ।
उपयाचितमादेशाः सम्भवन्ति कलौ क्वचित् ॥
तस्मात्तन्मात्रलाभेन कलौ कार्यं न कारयेत् ।

अथैतानि व्याक्रियन्ते । दीर्घकालमष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यमित्यादिश्रुत्युक्तं तेन नैष्ठिकब्रह्मचर्यमर्थत एव निषिद्धम् । कमण्डलुधारणमथ कमण्डलुचर्यामुपदिशन्तीत्यादिबौधायनोक्तेतिकर्त्तव्यताक सोदकं च कमण्डलुमित्यनेन स्नातकस्य विहितं मृन्मयकरकधारणं न तु नैष्ठिकब्रह्मचर्यं पूर्वोक्तत्वेन पौनरुक्त्यात् । ना ऽपि वानप्रस्थाश्रमः, बृहन्नारदीये पृथग् उपादानात् । गोत्राच्च गोत्रोत्पन्नायाः पितृष्वसुः, मातृसपिण्डान्मातुलाद्, गोत्रसापिण्ड्ययोः सामान्यनिषेधेनैव प्राप्त्यभावादेतन्निषेधानुपपत्तेरयमर्थः कर्त्तव्यो यः श्रुतिस्मृतिसदाचारैर्मातुलकन्यापरिणयो निर्णीतः सो ऽत्र निषिध्यत इति । तेन यानि कानि चित् मातुलकन्यापरिणयनिषेधकानि मन्वादिवाक्यानि तानि कलिविषयाण्येव ।

अत एव व्यासेन कलिनिन्दाप्रक्रमे ।

तृतीया मातृतः कन्यां तृतीयां पितृतस्तथा ।
शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः ॥ इत्युक्तम् ।

मातृतो मातृपक्षे कूटस्थां तृतीयां मातुलसुतां पितृतः पितृपक्षे तृतीयां पैतृष्वसेयीमित्यर्थः । एतेन विधायकवाक्यानां युगान्तरविषयत्वं कृष्णार्जुनादीनां मातुलकन्यापरिणयेन स्पष्टीकृतमिति न क्वापि विरोधः । अत एवाधुनिकाना तदाचारो ऽप्यनाचारः इति बौधायनेन पञ्चधा विप्रतिपत्तिर्दक्षिणत इत्युपक्रम्य यथैतदनुपेतेन सह भोजनं स्त्रिया सह

भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनं चेति । तथोत्तरतः, ऊर्णाविक्रयः सीधुपानं उभयतोदद्भिर्व्यवहारः आयुधीयकं समुद्रयानमित्यनेन प्रतिपादितम् । यदपि तत्र तत्र देशप्रामाण्यमेव स्यादित्यनेन तत्तद्देशे ऽनुष्ठेयत्वमुक्तम्, तदपि पूर्वपक्षतया, सिद्धान्ते तु मिथ्या एतदिति गौतम, उभयमेव नाद्रियेत शिष्टस्मृतिविरोधादिति प्रतिपादितत्वाद्, इत्यलम् ।

गोवधो मधुपर्कादौ न तु गोमेधे तस्य बृहन्नारदीये पृथगुपादानात् । यद्यपि मुख्यनिषेधे अनुकल्पो न प्राप्नोति तथाऽपि वचनाद्भवति ।

तदाह मार्कण्डेयः ।

माधुपर्किकपश्वर्थं ततो मात्रां प्रकल्पयेत् ।
सहिरण्यं बीजमात्र द्रविणेन सदैव तु ॥
पशुः कलौ न कर्तव्य इत्याह भगवान्भृगुरिति ।

नरमेधो ब्रह्मणे ब्राह्मणमालभत इत्यादिनोक्तः । अश्वमेधस्तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजत इत्यनेनोक्तः । मद्यं सुरा । द्वादशं तु सुरामद्यमिति पुलस्त्यस्मरणात् । सा च सौत्रामण्यादौ कलौ निषिध्यते । सौत्रामण्यां सुराग्रह इति कलिवर्ज्ये वचनात् । सौत्रामणीप्राप्तिश्च नराश्वमेधसाहचर्यात् । तत्रापि सुराशब्देन पैष्ट्येव । तत्प्रकरणे तस्या एवोत्पत्तिप्रकारदर्शनात् ।

अथ वा मद्यशब्देन पानसाध्यैकादशविधं मद्यमेव ।

यथाऽऽह पुलस्त्यः ।

पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् ।
मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम् ॥
समानानि विजानीयान्मद्यान्येकादशैव त्विति ।

तानि च द्विजातिभिस्त्रिभिर्मूर्द्धावसिक्तादिभिः षड्भिश्चानुलोमजैः कलौ वर्ज्यानि । तत्र ब्राह्मणस्य नित्यं मद्यं ब्राह्मणो वर्जयेदिति चतुर्ष्वपि युगेषु प्रतिषेधे ऽपि यत्र अनन्यौषधसाध्यव्याध्युपशमार्थं मद्यमभ्यनुज्ञातं तस्या ऽयं कलौ निषेधः ।

तथा च धन्वन्तरिः ।

मद्यप्रयोगं कुर्वन्ति शूद्रादिषु महार्त्तिषु ।
द्विजैस्त्रिभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्मृतमिति ॥

यद्यपि क्षत्रियवैश्ययोः ।

कामादपि हि राजन्यो वैश्यो वाऽपि कथं च न ।
मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते ॥

इति बृहद्याज्ञवल्क्येन तालादिमद्यमभ्यनुज्ञातं तथाऽपि द्विजैस्त्रिभिस्तु न ग्राह्यमिति वचनात्कलौ निषिध्यत इत्यलम् ।

तथा देवरात्पतिसोदरात्सपिण्डात्सगोत्राद्वा वाग्दानानन्तरं पतिमरणे भ्रातृपत्न्यां पुत्रोत्पत्तिः ।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥
अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्तस्तावियात् ॥

इत्यादिमनुयाज्ञवल्क्याद्युक्तविधिना । न तु विवाहानन्तरं विधवायाम् । तस्य "नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभि"रित्यादिना मनुनैव पूर्वं निषेधात् । तेन धर्मज्ञसमये बौधायनवाक्ये च विधवाशब्दो व्याख्यात इति प्राञ्चः । वस्तुतस्तु

उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु ।
युगह्रासादशक्योऽयं कर्तुं सर्वैर्विधानतः ॥
तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः ।
द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता ॥

इति बृहस्पतिना विवाहोत्तरविधवानियोगनिषेधस्य मनूक्तस्य कलिविषयत्वेनोपसंहाराद्वाग्दत्ताविषयको नियोगः कलावप्यभ्यनुज्ञायत इति अपरार्ककुल्लूकभट्टादिस्वरसत एव तत्प्रसङ्ग । नष्टे मृते प्रव्रजित इत्यनेनाऽग्रे पराशरेणैव देवरातिरिक्तस्यविधानादित्यलम् । दत्ता संस्कृता न वाग्दत्ता तदानीं क्षतत्वाप्रसङ्गेन कन्यास्वविशेषणानर्थक्यापात् । कन्या

अक्षतयोनिर्दत्ताक्षताया इति वचनात् कन्येति विशेषणेन दानयोग्यतायामपीत्युक्तं दानमन्यस्मै प्रतिपादनं पुनर्दानं परस्य चेति वचनात् । यज्ञे ज्योतिष्टोमादौ मैत्रावरुणीमनुबंध्यामालभेतेत्यादिना विहितो गोवधः । प्रत्येकमेवाऽत्र निषेधः स्पष्टः । समुद्रे नौकादिना द्वीपान्तरं यो याति तस्याऽन्यैः, "समुद्रयानं ब्राह्मणस्य न्यासापहरणमि"त्यादिबौधायनोक्तप्रायश्चित्तकरणे ऽपि स्वीकारो व्यवहारः द्विजस्याब्धौ तु नौयातुः शोधितस्याऽपि संग्रह इति वाक्यात् । द्विजानां ब्रह्मक्षत्रविशामसवर्णकन्यासु ऋतुगमनयाचने ऽपि गमनं तद्विवाहस्य धर्मज्ञसमये पृथक् निषेधात् । श्राद्धे पार्वणादौ मांसपरिवेषणम् ।

शौचं च पात्रशुद्धिश्च श्रद्धा च परमा यदि ।
अनन्ततृप्तिकृच्छ्राद्धे एतत् खलु न चामिषम् ॥
यस्तु प्राणिवधं कृत्वा मांसेनातर्पयेत् पितॄन् ।
सो विद्वाश्चन्दनं दग्ध्वा कुर्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे यथा किञ्चिद्बाल आदातुमिच्छति ।
पतत्यज्ञानतः सो ऽपि मांसेन श्राद्धकृत्तथा ॥
सर्वथान्नं यदा न स्यादामिषं तु तदाश्रयेत् ।
ब्राह्मणश्च स्वयं नाऽद्यात्तच्च श्वादिहतं यदि ॥

इति बृहत्पराशरस्मरणात् ।

मांसादनमिति पात्रे कथञ्चिद्दत्तस्याऽपि भक्षणम् । वानप्रस्थस्तृतीयाश्रमः, महाप्रस्थानगमनमुत्तरदिग्लङ्घनं, गोमेधो यागविशेषः । विहितानीति जनमेजययज्ञसमापने सति बुधैस्तत्तद्वाक्यविहितान्यपि कर्माणि कलौ धर्मलोपभयान्निवर्तितानि तदनुष्ठानयोग्यसाधुपुरुषालाभात् । यथा आततायिनामुद्यतशस्त्रादीनां द्विजाग्र्याणां विप्राणां "ब्राह्मणं वा बहुश्रुतं । आततायिनमायान्तं हन्यादेवे"त्यादिना विहितं सम्मुखमकूटशस्त्रेण मारणम् । एतेन नाततायिवधे दोषो ऽन्यत्र गोब्राह्मणेभ्य इति सुमन्तुवाक्य सामान्यमपि कलिविषयं सिद्धम् । सत्रे गवामयनादौ सप्तदशावराश्चतुर्विंशतिपरमास्सत्रमासीरन्नित्यादिना विहिते दीक्षा यजमानानाम् ।

सौत्रामण्या यागविशेषे यजेत वा सौत्रामण्या इत्यादिना विहिते अथ सुराग्रहान्गृह्णातीति विहितसुराग्रहणकर्तुः सग्रहो व्यवहारः। तेन च सुराग्रहनिषेधो ऽपि सिध्यति। सौत्रामणीति वाजपेयाद्युपलक्षणम्।

यज्ञादौ च गवालम्भं वाजपेयसुराग्रहम्।
अग्निहोत्रहवण्याश्च निर्लेहं च कलौ त्यजेत्॥

इति बौधायनीयभाष्ये वसिष्ठस्मरणात्। अग्निहोत्रं हूयते यया स्रुचा सा वैकङ्कत्यग्निहोत्रहवणी तस्याश्च नित्य होमानन्तरं हुतावशिष्ट-प्राशनार्थं लेहो जिह्वयास्वादनम्। कथं चिल्लीढायास्तस्याः पुनः परिग्रहो दिनान्तरे होमसाधनता। वृत्तमग्निहोत्रादि स्वाध्यायो वेदस्तावपेक्ष्याघ-स्याशौचस्य वेदाग्नियुक्तविप्रस्य त्र्यहमाशौचमिष्यत इत्यादिबलादिवि-हितसङ्कोचः। स चाशौचिसम्पर्के। सम्पर्काभावे तत्सङ्कोचस्य वक्ष्यमाण-त्वात्। कामकृते महापातकादौ मरणान्तिकं यत्प्रायश्चित्तं "न तस्य निष्कृ-तिर्दृष्टा भृग्वग्निपतनादृत" इत्यादिनोक्तं तस्य विधानमुपदेशः। "मति-पूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिरिति" मनुस्मरणात् तर्हि कथं तद-नुष्ठेयमिति चेत्स्वयमेव धर्मशास्त्राज्ज्ञात्वाऽन्यापदेशेन पृष्ट्वा वेति ब्रूमः।

संसर्गदोषः पतितसंसर्गेण पातित्यं "संवत्सरेण पतति पतितेन सहाचरन्नि"त्यादिना प्रतिपादितम्। कलौ पतति कर्मणेति वाक्या-त्। उपपादितं चैतत्प्राक्। एवं च संसर्गः शोधितैरपीत्यादिस्संसर्गनि-षेधो नानुपपन्नः। अन्यथा पतितसंसर्ग दोषाभावः शोधितसंसर्गनिषे-धश्चेति महद्वैषम्यं स्यात्। स्तेयान्यस्मिन्सुवर्णस्तेयव्यतिरिक्ते महापातके निष्कृती रहस्यप्रायश्चित्तं न प्रायश्चित्तमात्रं विरोधात्। नापि प्राणा-न्तिकं तस्योपदेशनिषेधेन स्वयं कर्तव्यताभ्यनुज्ञानात्। नापि व्यवहारः। ब्राह्मणभोजनादिविधिविरोधात्। नापि परलोकशुद्धिः। तस्या साक्षात्पु-रुषकृत्यसाध्यत्वेनावर्जनीयत्वात्। नाप्युपायनिषेधेन तन्निषेधः। पूर्वोक्त-विधिविरोधात्। तस्माद्रहस्यप्रायश्चित्तमिति व्याख्येयम्। तद्विधिर्मूले।

अत एव बृहन्नारदीयविष्णुपुराणादिषु ।
छादयन्ति प्रयत्नेन स्वदोषम्पापकर्मिणः ।
रहस्यामेव कुर्वन्ति प्रायश्चित्तक्रिया कलौ ॥
मनःशुद्धिविहीनाना निष्कृतिर्न ततो भवेद् ।

इत्यादिना तत्र तत्र कलिनिन्दाप्रक्रमे रहस्यमेव निन्दितं वक्ष्यति चैतन्नवमे "तस्मात्प्रकाशयेत्पापमि"त्यादिना । स्कान्देपि काशीखण्डे नवैतानि प्राकाश्यानि रहःपापमकुपितमित्यादिना । न चैवं सुवर्णस्तेयवर्जनमसङ्गतम् । तस्य कलावपरिहार्यत्वेन सुवर्णस्तेयस्य प्रतिनिमित्तं पर्षदुपदेशासम्भवेन रहस्यप्रायश्चित्ताभ्यनुज्ञानार्थत्वात् । वरातिथिभ्यां मधुपर्के, पितृभ्यः श्राद्ध इति व्याख्यातम् ।

दत्तो मातापितृभ्यामन्यतरेण वा पुत्र प्रतिग्रहीष्यन्बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्ट एव प्रतिगृह्णीयादित्यादिवसिष्ठोक्तविधिना पुत्रीकृतः । औरसो धर्मपत्न्यां स्वस्मात्प्रसूतस्ताभ्यामितरेषा क्षेत्रजादीनां दशानां पुत्रत्वेन स्वीकारः ।

तथा च बृहस्पतिः ।

अनेकधा कृताः पुत्राः ऋषिभिर्ये पुरातनैः ।
न शक्यास्ते ऽधुना कर्तुं तपोहीनैरतन्द्रितैः ॥

अधुना कलियुग अतन्द्रितैरिति मुनिविशेषणम् । तथा

क्षेत्रजो गर्हितः सद्भिस्तथा पौनर्भवः सुतः ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥
दत्ता ऽपविद्धः क्रीतश्च अपविद्धस्तथैव च ।

दत्तनिषेधोऽत्रासवर्णविषयः। "सजातीयेष्वयं प्रोक्त"इति योगिना असवर्णनिषेधादिति तन्न । अपविद्धस्य द्विर्निषेधानुपपत्तिस्तस्मादेव व्याख्येयम् । दत्तः पितृभ्यां परिग्रहीत्रा परिगृह्य त्यक्तः । सोऽन्यन न पुत्रीकार्यः । पुनर्भून्यायात् । सवर्णान्या असवर्णा या अङ्गनाः ताभिर्दुष्टैस्तत्संपृक्तैः कृतप्रायश्चित्तैरपि संसर्गः । गुरुस्त्रियाः शिष्यस्त्रियाः जुङ्गितोपगतायाश्च स्त्रिया अयोनौ सङ्ग्रहे सति परित्यागः ।

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

इत्याद्युक्तः । अत्रायेनाविति विशेषोपादानादन्ययोन्ययोन्योः साधारण्येन संसर्गे परित्याग इति गम्यते ।

परेषां गोब्राह्मणादीनामुद्देशेन निमित्तेन तदापद्विमोक्षार्थं प्राणत्यागः "गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान्परित्यजे"दित्याद्युक्तः । उच्छिष्टस्पर्शादिवर्जनं स्वमुच्छिष्टमुच्छिष्टोपहतं वेत्यादिवसिष्ठाद्युक्तं तन्निमित्तं प्रायश्चित्तं च । विष्ण्वादिप्रतिमाविशेषस्य यावज्जीविकः पूजनसङ्कल्पः । इयमेव प्रतिमा यावज्जीवं मया पूजनीयेत्येवमादिः ।

चतुर्थेऽहनि कर्तव्यमस्थिसञ्चयनं बुधैः ।
ततः सञ्चयनादूर्ध्वमङ्गस्पर्शो विधीयते ॥

इत्यादिवाक्यविहितोऽस्थिसञ्चयनानन्तरमङ्गस्पर्शः । शामित्रं यज्ञे स्वयं पशुप्रमापणं विप्राणाम् । सोमलतायाः विक्रयश्च । षण्णां भक्तानामनशनमुपवासत्रयं तस्मिन् बुभुक्षित स्त्र्यहं स्थित्वा धान्यमब्राह्मणा द्धरेदित्यादिना विहितमपहरणम् ।

शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥

इत्यादिना विहितं शूद्राणां भोज्यान्नत्वम् । गृहस्थस्याहिताग्नेरतिदूरेण तीर्थयात्रा ।

धनान्यर्जयितुं युक्तः प्रवासो ह्यग्निहोत्रिणः ।
धनैर्यत्सम्भवेदिज्या तीर्थार्थं न तु त्यजेदिति मनूक्ता ।

ब्राह्मणानामापदि क्षत्रादिवृत्तिभिर्जीवनम् । क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विज इत्याद्युक्तम् ।

तथैवाश्वस्तनिकतया जीवनम् । "त्र्याहिको ऽश्वस्तनो ऽपि वे"त्युक्तम् । विप्राणां सन्ततिजीवनाय जातारण्यपरिग्रहः । ब्राह्मणानां सर्वदा प्रवासशीलत्वम् । "वृथा तु न चिरं वसेदिति" स्मरणात् ।

मुखेनाग्निधमनं "मुखेनोपधमेदग्निं मुखादग्निरजायते"त्युक्तम् । बला-द्दासीकरणादिना दुष्टायाः स्त्रियाः पुनः संग्रहः । संन्यासिनस्सार्ववर्णिकं भैक्षं "चातुर्वर्ण्यं चरेद्भैक्ष्यमि"त्याद्युक्तम् । अभिनवोदके दशाहवर्ज्जनं "दशरात्रेण शुध्यन्ति भूमिष्वभिनवोदकमि"त्यादिनोक्तम् । आकालिक-नवोदकदशाहनिषेधस्य प्रतिप्रसवेऽपि कालिकत्र्यहनिषेधस्य न प्रतिप्रस-वः । तथा च स्मृत्यन्तरे ।

काले नवोदकं शुद्धं न पिबेच्च त्र्यहं तु तत् ।
अकाले तु दशाहं स्यात्पीत्वा नाद्यादहर्निशमिति ॥

ब्रह्मचारिणः स्नानार्थं गुरवे दक्षिणादानं "गुरवे तु वरं दत्वा स्नायीत तदनुज्ञयेत्यादि"नोक्तम् । ब्राह्मणादिचतुर्वर्णगृहेषु शूद्राणां पाच-कत्वम् । "आर्याधिष्ठिता वा शूद्राः संस्कर्तारः स्युरि"त्याद्यापस्तम्बोक्तम् । भृग्वग्न्यनशनाम्बुभिर्वृद्धादीनां प्राणत्यागः ।

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥ इत्याद्युक्तः ।

गोतृप्त्यधिके जले शिष्टानामाचमनकरणम् । "शुचि गोतृप्तिकृ-त्तोयं प्रकृतिस्थं महीगतमि"त्युक्तम् । पितापुत्रयोर्विरोधे साक्षिणां समा-धातॄणां च दण्डविधानम् ।

पितापुत्रविरोधे तु साक्षिणां त्रिपणो दमः ।
अन्तरे च तयोर्यः स्यात्तस्याप्यष्टगुणो दम इत्युक्तम् ॥

संन्यासिना यत्र सायङ्कालस्तत्रैवावस्थान "यत्र सायं गृहो मुनि-रि"त्युक्तम् । एते पूर्वोक्ता धर्मा स्मृत्युक्ता अपि कलेरादौ महात्मभिर्वैकम-त्येन क्व चिच्छास्त्रविरोधात्क्व चिच्च दृष्टविरोधान्निवर्तिताः ।

ननु यत्र विशेषशास्त्रमस्ति तत्रास्तु तन्निवृत्तिर्दृष्टविरोधमात्रे तु शास्त्राविरोधे कथं महात्मवचनमात्रेण तन्निवृत्तिरस्त्वित्यत आह समयो-ऽपि शिष्टानां श्रुतिस्मृतिवत्प्रमाणं तदाहापस्तम्बः "धर्मज्ञसमयः प्रमाणं वेदाश्चेति" ।

ननु महात्मनां समयेऽपि कथं प्रामाण्यं न तावच्छ्रुतिवत्स्वतः, तस्य

लौकिकत्वात् । नापि स्मृतिवच्छ्रुतिमूलतया । प्रत्यक्षश्रुतिविरोधेन तदनुमानासम्भवात् । नापि स्मृतिमूलकतया । प्रत्यक्षस्मृतिविरोधात् । अत एव नानुमितस्मृतिमूलकतयापि । नाप्य"स्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न त्वि"त्यादिप्रत्यक्षस्मृतिरेवात्र मूलमिति वाच्यम् । श्रुतिस्मृतिविरोधेनाप्रमाणस्याचारस्य तद्बाधकत्वायोगात् । एवं च सति श्रुतिस्मृतिविहितस्य धर्मस्य लोकविरोधे नाननुष्ठानं विरुद्धमनेनोच्यत इति नास्यापि तन्मूलत्वसम्भवः । किं च त्रैविद्यानां वैदिककर्मविद्वेषासम्भवात्तद्बाह्यानां तु वैदिककर्ममात्रविद्वेषादेतावन्मात्रेण कर्मविशेषपरिगणनमपि न सम्भवति । वस्तुतस्तु अस्वर्ग्यं नाम दृष्टफलकं धर्ममपि मधुपर्कीयगवालम्भनादि लोकविद्विष्टं नाचरेदित्यर्थपरत्वात्तस्य सत्रदीक्षादावदृष्टफलककर्मनिषेधकत्वं दुरध्यवसानमिति ।

अत्रोच्यते । यदेवानूचानः किं च नाभ्यूहत्याथे तद्ब्रवतीति श्रुतेः ।

धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः ।
क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः ॥

इतिस्मृतेश्चास्य प्रामाण्ये मूलत्वम् । विशेषतस्तु ब्राह्मनारदीयाद्युक्तनिषेधा एवास्य प्रायशो मूलमन्यत्रापि तत्तत्स्मृतिषु निषेधवाक्यानामेव मूलत्वमवगन्तव्यमित्यलं बहुना ।

ज्येष्ठांशं भ्रातॄणां विभागे "ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वर"मित्याद्युक्तम् । मधु क्षौद्रम् ॥

मधुना रहिते श्राद्धे निराशाः पितरो गताः ।

इत्यादिना विहितम् । अग्निहोत्रादिकं च व्याख्यातमेव प्राक् । तथा शपथाः दिव्यानि प्रमाणानि । शकुनाः काककपोतादिचेष्टाविशेषाः । सामुद्रिकं करचरणादिवर्तिरेखोपरेखादिकम् । उपश्रुतिश्चैलधावादिगृहपार्श्वे स्थित्वा चिन्तितार्थसूचकशब्दाकर्णनम् । उपयाचितं ममास्मिन्नर्थे सिद्धे गणपतये मोदकान् दास्यामीत्यादिसङ्कल्पः । आदेश आशीर्वादः । ज्योतिःशास्त्रबलेन भविष्यादिकथनं वा । एतेषां कलौ क्वाचित्कः

संवादस्तेन तावन्मात्रावष्टम्भेन निःशङ्कप्रवृत्तिर्न कार्येति । युगमिति देशस्याप्युपलक्षणं तेन तद्देशाचारोऽपि न निन्द्यः । यथाह बौधायनः ।

पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तान्यनुव्याख्यास्यामो यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमित्यथोत्तरत उर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयानमिति तत्रेतरदितरस्मिन् कुर्वन् दुष्यतीतरदितरस्मिन् तत्र तत्र देशप्रामाण्यमेवस्यान्मिथ्यैतदिति गौतम उभयमेव नाद्रीयेत शिष्टस्मृतिविरोधदर्शनादिति । बृहस्पतिः ।

उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ॥
उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः ।
सजाताश्चापि गृह्णन्ति भ्रातृभार्याम भर्तृकाम् ॥
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ।
विहिताकरणान्नित्य प्रतिषिद्धनिषेवणात् ॥
भक्ताद्धाहमप्रदायैषा रोषं गृहीतया । *
सर्वदेशेष्वनाचारो रुयातास्रूलचर्वणमिति ॥

ननु तत्तद्धर्माणां युगानुरूपत्वादनिन्द्यत्वमस्तु अधर्मेषु तु कथमित्यत आह ।

**युगे युगे तु सामर्थ्यं शेषं मुनिविभाषितम् ।**
**पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयते ॥ ३४ ॥**

युगे युगे कृतादियुगेषु पराशरेण चकारान्मनुगौतमशङ्खलिखितैश्च यदुक्तं प्रायश्चित्त तथा विधीयते ।

यद्यपि कृते तु मानवा धर्मा इत्यनेनैवेदं सिद्ध प्रायश्चित्तानामपि धर्मत्वात्, तथापि मन्वाद्यनुक्ताना स्मृत्यन्तरादुपादानविधानाय पुनरनूद्यते तदेवाह शेषं, मन्वादिभिः कृतादिषूक्तप्रायश्चित्तादवशिष्टमाकाङ्क्षितं च यत्प्रायश्चित्तं तदन्यमुनिभिर्याज्ञवल्क्यादिभिर्विभाषितमेव विधीयते कुत एवमुच्यत इत्यत आह सामर्थ्यं यत इदं सम्यगर्थप्रा-

---

* असङ्गतमिदम् ।

प्तम् । अयमर्थः येषु निमित्तेषु पराशरादिभिः प्रायश्चित्तं नोक्तं तत्र नैमित्तिकावश्यम्भावेन स्मृत्यन्तरोक्तं ग्राह्यं न्यायसिद्धत्वादस्यार्थस्य । इद-मेव अभिप्रेत्य सुव्रतोऽपि बृहत्पराशरीये "पराशरश्च यत्प्राह"त्यादिना सर्वं स्वसंहिताप्रतिपाद्यमनुक्रम्याऽन्ते ।

दिष्टं च तत्परं ध्येयं सर्वमेतत्पराशरः ।

प्रोक्तवान् व्यासमुख्याना शेषं मुनिविभावितम् ॥ इत्युपसञ्जहार ।

ननु पराशरेण त्वयाद्यापि तस्यावचनात्कथमस्माभिस्तज्ज्ञेयमि-त्यत आह ।

**अहमद्यैव तत्सर्वमनुस्मृत्य ब्रवीमि वः ।**
**चातुर्वर्ण्यसमाचारं शृण्वन्तु मुनिपुङ्गवाः ॥ ३५ ॥**

अहं पराशरोऽद्यैव तत्सर्वं प्रायश्चित्त पूर्वकल्पीयपराशरोक्तधर्म-शास्त्रं तन्मूलभूतं श्रुतिनिश्चयं चानुस्मृत्य भो ऋषिपुङ्गवा मुनिमुख्याश्चा-तुर्वर्ण्यसमाचारं चत्वारो वर्णाश्चातुर्वर्ण्यं तेन सम्यक् श्रुतिस्मृत्यविधेना-चर्यतेऽनुष्ठीयते इत्याचारः स्नानसंध्यादिस्तं च वो युष्मभ्यं ब्रवीमि यूयं च सावधानाः शृण्वन्तु अहरहर्नयमानोऽपि गामश्वं पुरुषं पशुमिति वच्चकाराभावेऽपि समुच्चयसिद्धेः । एवं च प्रश्नोत्तरयोः समानविषयत्वं भवत्यन्यथोत्तरस्य न्यूनतापातात् । प्रायश्चित्तस्य पूर्वमुपादानं प्रकृतत्वात् । अहमित्यनेनार्थस्मर्तृप्रवक्त्रोरैक्याभिधानाद्व्याख्यानाम्रभिप्रायान्तरशङ्का नि-रस्ता । अद्यैवेत्यनेन कालविलम्बसम्भावनयोद्वेगो निरस्तः । अनुस्मृत्येत्य-नेनामूलत्वविपर्यस्तमूलत्वशङ्का चापाकृतेति । एवमुपोद्घातं समाप्य विवक्षितधर्मश्रवणाय पुनः सावधानता सम्बोधनेनापाद्यते ।

वक्ष्यमाणधर्मजातस्य सत्प्रमाणतामभिधातुं तदेवादौ प्रशंसति ।

**पराशरमतं पुण्यं पवित्रं पापनाशनम् ।**
**चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च ॥ ३६ ॥**

पराशरमतं पराशरोक्तं धर्मशास्त्रं पाठतोऽर्थतश्च चिन्तितं सत्पुण्यं पुण्यजनकं पुनः पाठस्यैव प्रयोजनद्वयमिष्टप्रापणमनिष्टनिवर्तनं च विशे-

षणद्वयेनाह । पवित्रं पापनाशनमिति, पवित्रं स्वर्गादिजनकं पापनाशन नरकादिनिवर्तकम् । अर्थज्ञानस्यापि विशेषणद्वयेन प्रयोजनद्वयमाह ब्राह्मणार्थाय धर्मसंस्थापनाय चेति, ब्राह्मणस्यार्थः प्रयोजनं स्वधर्मानुष्ठानमिति यावत्तस्मै धर्मसंस्थापनं परेषामुपदेशेनानुष्ठापनं तस्मै च ।

तदुक्तं बृहत्पराशरेण ।

पराशरमतं पुण्यं पवित्रं पापनाशनम् ।
चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च ॥

इति । इत्याचारावतारः ।

इदानीं वक्ष्यमाणाचारस्य प्रयोजनवत्त्वायान्वयव्यतिरेकाभ्यां धर्मसाधनतामाह ।

**चतुर्णामपि वर्णानां साचारो धर्मपालकः ।**
**आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥ ३७ ॥**

चतुर्णामपि वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणामाचारः श्रुतिस्मृत्युदितसाधुसेवितक्रियानुष्ठानम् ।

श्रुतिस्मृत्युदितो यश्च साधुभिर्यश्च सेवितः ।
तमाचारं निरीक्षेत धर्मकामजितेन्द्रियः ॥

इति विष्णुस्मरणात् । धर्मस्य सुकृतपूर्वस्य पालकमनुत्पन्नस्योत्पादकमुत्पन्नस्य च संरक्षकम् । "आचारप्रभावो धर्म आचारो धर्मपालनमि"-तिस्मरणात् । आचारात्पूर्वोक्ताद् भ्रष्टो ऽनुष्ठानाशक्तो देहो येषां तेषां धर्मः सुकृतं पराङ्मुख उत्पत्तिकारणसद्भावेऽप्यङ्गवैकल्येन नोत्पद्यत इत्यर्थः ।

तदाह वसिष्ठः ।

नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणाः ।
हीनाचारमितो भ्रष्टं तारयन्ति कथं च न ॥ इति ।

बृहत्पराशरोऽप्येतदेवाह ।

चतुर्णामपि वर्णानामाचारो धर्मपालनम् ।
आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥ इति ।

यत् प्रतिज्ञातं चातुर्वर्ण्यसमाचारं ब्रवीमीति तदेवाह ।

षट्कर्माभिरतो नित्यं देवतातिथिपूजकः ।
हुतशेषं तु भुञ्जानो ब्राह्मणो नावसीदति ॥ ३८ ॥

षट् च तानि कर्माणि षट्कर्माणि तानि च संध्यास्नानादानि तेषामेव वक्ष्यमाणत्वात् । बृहत्पराशरेणापि । षट्कर्माभिरत इत्यत्र कर्माणि कानीत्यपेक्षाया "कर्मषट्कं प्रवक्ष्यामी"ति प्रतिज्ञाय ।

संध्या स्नानं जपश्चैव देवतानां च पूजनम् ।
वैश्वदेवं तथातिथ्यं षट्कर्माणि दिने दिने ॥

इत्याभिधानाच्च न त्वध्यापनादीनि ।

अध्यापनं अध्ययनं यजनं याजनं तथा ।
दान प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ॥

इति मनूक्तानि । तेषामेव विधानात् । चातुर्वर्ण्यसाधारण्याभावेन प्रतिज्ञाविरोधाच्च । प्रकृतानां तु भूम्ना साधारण्यात् । तेषु नित्यमभिरतस्तदनुष्ठाने निरतो देवता विष्ण्वादिरतिथिर्वक्ष्यमाणस्तयोर्नित्यं पूजको हुतशेषं वैश्वदेवावशिष्टं च भुञ्जानो ब्राह्मणश्चातुर्वर्णिकश्चातुर्वर्ण्योपक्रमेण "वेदो वा प्रायदर्शनादिति"न्यायेन ब्राह्मणपदस्य चातुर्वर्ण्यपरत्वात् । नावसीदति न प्रत्यवायी स्यात् । नित्यानेकाह्निकाननुष्ठानकृतः प्रत्यवायस्त्वेतावन्मात्रानुष्ठानेऽपि न स्यादित्यर्थः । देवपूजादीनां षट्कर्मान्तर्गतत्वेऽपि पुनर्वचनं सायं संध्योत्तरकालमप्येषां पुनरनुष्ठानप्रतिपादनाय । तथा च शौनकः ।

प्रातर्मध्यं दिने सायं विष्णुपूजां समाचरेदिति ।

अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः । इति योगीश्वरोऽपि । आश्वलायनोऽपि, अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयादिति । मनुरपि ।

सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितमिति ।

एतेन अहोरात्रकर्तव्यमनेनोक्तमाह्निकमात्रन्त्वपेतनेनेति न पौनरुक्त्याशङ्केति साधीयसीयं व्याख्या

षट्कर्माण्याह ।

**सन्ध्या स्नानं जपो होमो देवतानां च पूजनम् ।**
**आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने ॥ ३९ ॥**

यद्यप्यत्र सन्ध्यास्नानमितिशाब्दः क्रमः प्रतीयते तथाप्यग्निहोत्रं जुहोति यवागूं पचतीतिवदार्थक्रमेणासौ बाध्यते । स्नानस्य शुद्धिहेतुत्वाच्छुद्धस्यैव च सन्ध्यावन्दनाद्यधिकारात् । अत एव दक्षः ।

अस्नात्वा नाचरेत्कर्म जपहोमादि किं च न ।
सर्वमर्हति शुद्धात्मा प्रातः स्नायी जपादिकम् ॥ इति ।

ननु

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥

इति दक्षेणैव सन्ध्यावन्दनस्यापि सर्वकर्माङ्गत्वाभिधानाद्यथाश्रुत एवास्तु क्रम इति चेत् । मैवम् । अत्र सर्वत्वमाधिकारिकमितिन्यायेन स्नानातिरिक्तसर्वकर्माङ्गता सन्ध्यावन्दनस्योच्यते । अन्यथा स्नानाङ्गताप्युच्येत । प्रातःस्नायी जपादिकमर्हतीति पूर्ववाक्येनाहत्यैव स्नानस्य सन्ध्यावन्दनाङ्गताबोधनात् । तस्मात्स्नानं पूर्वभावीति सिद्धम् । यद्वा अशक्तस्य प्रातःस्नानं विनापि प्रातःसन्ध्या भवतीति सूचयितुं सन्ध्यायाः पूर्वमुपादानम् । प्रातःसन्ध्यामुपासीत दन्तधावनपूर्विकामिति योगीश्वरस्मरणात् ।

वस्तुतस्तु सन्ध्यायां स्नानमिति विग्रहेण स्नानस्य कालविधानार्थं सन्ध्याग्रहणम् । अत एव वक्ष्यति द्वादशाध्याये ।

भास्करस्य करैः पूतं दिवास्नानं प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥ इति ।

सन्ध्यालक्षणमाह बृहन्मनुः ।

उदयात्प्राक्तनी सन्ध्या घटिकात्रयमिष्यते ।
सायसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ इति ।

अत्र यद्यपि स्नानात्प्राग्भाविनां ब्राह्ममौहूर्तिकोत्थानहितचिन्तनदेहधर्मशौचाचमनदन्तधावनकेशप्रसाधनकुशोत्पाटनादीनामनभिधानान्न्यूनता मूलस्य तथापि कलौ षण्णामेव नित्यत्वादन्येषामनित्यतयाऽनभिधानान्न न्यूनता। अन्यथा षट्पदानर्थक्यापातात्। तथात्वेऽपि तेषामन्यतो विधिग्रहणाविरोधात्। उक्तं च प्राक् स्वयमेव "शेषं मुनिविभाषितमिति"। अत एव बृहत्पराशरेणाप्येषामेव षण्णां चित्तशोधकत्वेन मुक्तिहेतुत्वमुक्तम्।

कर्मषट्कं प्रवक्ष्यामि यत्कुर्वन्तो द्विजातयः।
गृहस्था अपि मुच्यन्ते संसारैर्बन्धहेतुभिरिति॥

यद्यप्यातिथ्यं वैश्वदेव चेत्यनेनातिथ्यस्य पूर्वभावः प्रतीयते तथापि

पौरुषेण च सूक्तेन ततो विष्णुं समर्चयेत्।
वैश्वदेवं ततः कुर्यात् बलिकर्म तथैवच॥

इति नारसिंहे देवपूजानन्तरं वैश्वदेवस्य तत इति पञ्चमीश्रुत्या क्रमाभिधानेन सन्निधिरूपयावत्क्रमबाधाद्वैश्वदेवस्य प्राथम्यात्। अत एव बृहत्पराशरः। "वैश्वदेवं तथातिथ्यं षट्कर्माणि दिने दिने इति। यद्वा वैश्वदेवात्प्राग् अतिथ्यागमने आतिथ्यास्य पूर्वभावं बोधयितुं प्राक्तन्निर्देशः। वक्ष्यति च।

वैश्वदेवे तु सम्प्राप्ते भिक्षुके गृहमागते।
उद्धृत्य वैश्वदेवार्थं भिक्षुकं तु विसर्जयेदिति॥

नन्वत्र सप्तत्वप्रतिभानात् षट्त्वं विरुद्धमिति चेत्। मैवम्। यानि कर्माणीत्युद्दिश्य तानि दिने दिने कर्तव्यानीति नित्यत्वविधौ समागन्यायेनोद्देश्यगतायाः षट्त्वसंख्याया अविवक्षितत्वादिति केचित्। तन्न। अस्यां स्मृतौ सन्ध्यादीनां वाक्यान्तरेणोत्पत्त्यभावादनेनैव वाक्येन नित्यत्वविशिष्टानां तेषामुत्पादनादुपादेयगतत्वेन पश्वेकत्ववत् षट्त्वस्यापि विवक्षितत्वात्। यद्यप्यग्निहोत्रं गवालम्भमित्यनेनाग्निहोत्रस्य कलौ निषेधात्तद्धोमपरिहारेण षट्त्वमविरुद्धम्।

अत एव

सन्ध्या स्नानं जपश्चैव देवतानां च पूजनम् ।
वैश्वदेवं तथातिथ्यं षट्कर्माणि दिने दिने ॥

इति बृहत्पराशरेण होमपरिहारेणैव षट्त्वाभिधानादिति । तदपि न । एवमग्निहोत्रहोमपरिहारेऽप्यौपासनहोमापरिहारात् । उक्तरीत्या अग्निहोत्रहोमस्याप्यपरिहाराच्च । तर्हि कथमिदं समाधेयम् । इत्थम् । जपस्य सन्ध्याप्रधानत्वेन पृथक्प्रधानत्वाभावान्न षट्त्वविरोधः । पृथगुपन्यासस्तु सकलकर्माशक्तौ गायत्रीजपमात्रमेव कार्यमित्येवमर्थः । प्राधान्यं च तस्यैव फलसम्बन्धश्रवणात् । अत एव बृहत्पराशरः ।

गायत्र्युपासिता येन तेनोपास्तं जगत्त्रयम् ।
गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः ।
इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात् ॥ इति ।

स्वयमप्यष्टमे वक्ष्यति ।

गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत् ॥
गायत्रीब्रह्मतत्त्वज्ञाः सम्पूज्यन्ते जनैर्द्विजाः ॥ इति ।

यद्वा जपः गुरूपदिष्टमन्त्रस्य ।

अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ।
अनर्चयित्वा देवांस्तु नरकं प्रतिपद्यते ॥

इति जपस्य प्राधान्यश्रवणात् । स च ब्रह्मयज्ञतर्पणयोरुपलक्षणम् । तथा च स्मृत्यन्तरे ।

स्नानं सन्ध्या जपो होमः स्वाध्यायो देवतार्चनम् ।
वैश्वदेवं तथातिथ्यं नवमं पितृतर्पणम् ॥
एतानि नव कर्माणि कर्तव्यानि दिने दिने ॥ इति ।

तत्र ब्रह्मयज्ञं द्वितीयाध्याये स्वयमेव वक्ष्यति । स्वाध्यायं चैवमभ्यसेदिति । तर्पणस्यात्रावचनं ब्रह्मयज्ञाङ्गत्वेन प्राधान्याभावात् । अङ्गत्वञ्चास्य ब्रह्मयज्ञानन्तरं देवतास्तर्पयति इत्युपक्रम्य देवर्षिपितृतर्पणान्यभिधाय पतितपुरुषं पितृस्तर्पयित्वेत्युक्त्वा दहनेत्यादि यद्ददाति । सा

दक्षिणेत्यभिधानात् मन्दशन्यायेन सिध्यति। तथाश्वलायनानाम्। याजुषाणां तु तर्पणं स्वतन्त्रमेव प्रधानम्।

स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः।
वैश्वदेवावसाने वा ब्रह्मयज्ञस्त्रिधा स्मृतः॥

इतिकात्यायनस्मरणात्। अत एव उदाहृतवाक्ये तर्पणस्य पृथङ् निर्देशः प्रधान्याभिप्रायेण। मूलवाक्ये षट्संख्याग्रहणं नवकर्माशक्त्यभिप्रायेण। वाक्यद्वयेऽपि दिने दिने इति वीप्साश्रवणात्। तेषां च षण्णामपि दिने दिन इति वीप्सया वसन्ते वसन्ते ज्योतिषा यजेतेत्यनेनाग्निष्टोमस्येव जीवनवदधिकारकत्वान्नित्यत्वं बोध्यते। अत एव तत्र तत्रैषामकरणे प्रत्यवायोक्तिरपि। तत्र स्नानं सविशेषं द्वादशाध्याये प्रतिपादयिष्यति। तदनन्तरं कार्यं वस्त्रपरिधानं त्वत्रोच्यते। तत्र योगियाज्ञवल्क्यः। 'स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय चेति"। धौते स्वयमेव। तथा च देवलः।

स्वयं धौतेन कर्तव्या क्रिया धर्म्या विपश्चिता।
न तु नेजकधौतेन नाहतेन न कुत्र चिदिति॥

नाहतमक्षतभिन्नम्। अच्छिन्ने सदशे "क्षौमं वासः प्रशंसन्ति तर्पणे सदशं तथेति" प्रजापतिस्मरणात्। वाससोऽर्धित्वक्रमयोर्विवक्षामाह।

व्यासः।

नोत्तरीयमधः कुर्यान्नोपर्यधस्थमम्बरम्।
नान्तर्वासो विना जातु निवसेद्वसनं बुधः॥ इति।

अन्तर्वासो लक्षणं संग्रहे।

शोडषद्वादशाष्टाभिरङ्गुलैर्विस्तृतन्तु यत्।
आयतं व्याममात्रं च तदन्तर्वास ईरितम्॥

जातूकर्ण्यः, वस्त्रौत्तरीयाभावे द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा सूत्रैर्वस्त्राकृतिपरिमण्डलं तदुत्तरीयं कुर्याद्वस्त्रस्य विवरं चेति। तच्च जीवत्पितृकैर्न धार्यम्।

तथा च संग्रहे—

उत्तरीयं योगपट्टं तर्जन्यां रजतं तथा ।
न जीवत्पितृकैर्द्धार्यं ज्येष्ठो वा विद्यते यदि ॥

उत्तरीयासम्भवे यज्ञोपवीतं धार्यम् ।

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यते ॥

इति स्मरणात् । शाणादीन्यपि वा धार्याणि ।

तदाह योगियाज्ञवल्क्यः ।

अलाभे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतपं योगपट्टं वा द्विवासास्तु यथाभवेत् ॥

अत्र द्विवासास्तु यथाभवेदिति हेतुमन्निगदेनोत्तरीयार्थमेव तदुपादानं न परिधानार्थमित्युक्तं भवति । तथा च जातूकर्ण्यः—

परिधेय सदा वासः कार्पासं सदशं सितम् ।
क्षौमं वा कुतपं वापि न कौशेय कदा च नेति ॥

सर्वथापि तदभावे पारस्करः "एकं चेद्वासो भवति तस्यैवोत्तरवर्गेण प्रच्छादयीतेति । प्रतिवर्णं वस्त्रवर्णानाह भृगुः

ब्राह्मणस्य सितं वस्त्रं तु यते रक्तमुल्वणम् ।
पीतं वैश्यस्य शूद्रस्य नील मलवदिष्यते ॥
विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च ।
श्रौतं स्मार्तं तथा कर्म न नग्नश्चिन्तयेदपि ॥
नग्नः स्यान्मलवद्वासा नग्नः कौशेयकेवलः ।
नग्नो द्विगुणवस्त्रः स्याच्चग्नो दग्धपटस्तथा ॥
नग्नश्च स्यूतवस्त्रः स्याच्चग्नो ग्रथितवस्त्रकः ।
नग्नश्च बहुवस्त्रः स्याच्चग्नः कौपीनकेवलः ॥
काषायवस्त्रः साक्षाच्च दश नग्नाः प्रकीर्तिताः ।

परिधानप्रकारमाह जातूकर्ण्यः

परिधानाद्बहिः कक्षा निबद्धा ह्यासुरीमता ।
धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

आर्द्रवस्त्रोत्तारणे विशेषः संग्रहे ।

स्नानं कृत्वार्द्रवस्त्रं तु ऊर्ध्वमुत्तारयेद्द्विजः ।
आर्द्रवस्त्रमधः स्याच्चेत्पुनः स्नानेन शुध्यति ॥

जाबालिः ।

निष्पीडितं धौतवस्त्रं यदा स्कन्धे विनिक्षिपेत् ।
तदासुरं भवेत्कर्म पुनः स्नानं विशोधनम् ॥
वस्त्रं चतुर्गुणीकृत्य निष्पीड्य सदश तथा ।
वामप्रकोष्ठे निक्षिप्य स्थलस्थश्च द्विराचमेत् ॥
वस्त्रं त्रिगुणितं यस्तु निष्पीडयति मन्दधीः ।
वृथास्नानं भवेत्तस्य स्नातस्यादशमम्बुनीति ॥

अथ तिलकविधिः, ब्रह्माण्डे

मृत्तिका चन्दनं चैव भस्म तोयं चतुर्थकम् ।
एभिर्द्रव्यैर्यथाकालमूर्द्ध्वं पुण्ड्रम्भवेत्सदा ॥
स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना ।
देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये ॥
जलेन तिलकं कुर्याज्जलान्तःकर्मसिद्धये ॥ इति ।

अत्र मृदादीनां स्नानाद्यनन्तरकालनियमेन स्नात्वा भस्मादिधारणं न सिध्यति । न चास्य पापापनोदकत्वेन काम्यत्वं शङ्क्यम् ।

ऊर्ध्वपुण्ड्रविहीनस्य स्मशानसदृशं मुखम् ।
अवलोक्य मुखं तस्य आदित्यमवलोकयेत् ॥
मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रं विना तु यत् ।
यः कर्म कारयेन्नित्यं तत्सर्वं निष्फलं भवेत् ॥
इति तत्रैवाभिधानात् ।

अथ सन्ध्याविधिः । तत्र सन्ध्याशब्दो यद्यपि कालवचनस्तथापि दर्शपूर्णमासादिशब्दवत्कालयोगं निमित्तीकृत्य कर्मनामधेयमिति कर्मसु गणितः । सा चैकस्मिन् दिवसे त्रिवारमुपास्या । यथाहात्रिः, "सन्ध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदे"ति । तस्याश्च कालनामत्रयमाह व्यासः ।

गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती च सायह्ने सैव सन्ध्या त्रिषु स्मृता ॥ इति ।

तस्याः कालमाह बृहन्मनुः ।

उदयात्प्राक्तनी सन्ध्या घटिकात्रयमिष्यते ।
सायसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ इति ।

ननु सर्वस्मृतिषूदयात्पूर्वमेव सन्ध्याकालोऽभिहितस्तत्कथमिदमुच्यते । सत्यम् । तस्योदयात्प्राक्कालीनस्नानपरत्वविषयत्वात् । अत्र तूदयानन्तरं स्नानं वक्ष्यतीति तदुत्कर्षेण सन्ध्योत्कर्षस्तदाद्युत्कर्षन्यायात् । आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीतिवत् । सूर्ये ज्योतिषि जुहोमीति मन्त्रलिङ्गाच्च तेनायमेवात्र युक्त इति । तत्तदितिकर्तव्यतामाह बृहत्पराशरः ।

आमणिर्बन्धनाद्धस्तौ पादौ वा जानुतः शुचिः ।
प्रक्षाल्य ह्याचमेद्विर्ह्यन्तर्जानुकरो द्विजः ॥
निर्मलाफेनपूताभिर्मनोज्ञाभिः प्रयत्नवान् ।
आचमेद्ब्रह्मतीर्थेन पुनराचमनाच्छुचिः ॥
वक्त्रनिर्मार्जनं कृत्वा द्विस्तेनैवापराण्यथ ।
अद्भिश्च संस्पृशेत्खानि सर्वाण्यपि विशुद्धये ॥
अङ्गुष्ठेन प्रदेशिन्या सव्यपाणिस्थवारिणा ।
घ्राणं संस्पृश्य नेत्रे च तेनानामिकया श्रुती ॥

नेत्रे च प्रदेशिन्यङ्गुष्ठाभ्यामेवेति शेषः । मध्यमाङ्गुष्ठयोगेन वा "मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं ततः" इति पैठीनसिस्मरणात् ।

नाभिं च तत्कनिष्ठाभ्यां वक्षः करतलेन च ।
शिरः सर्वाभिरंसौ च अङ्गुल्यग्रैश्च संस्पृशेत् ॥
आचम्य प्राणसरोध कृत्वा चोपस्पृशेत्पुनः ।
प्रत्योङ्कारसमायुक्ताः प्रणवाद्यन्तकास्तथा ॥
महाव्याहृतयः सप्त दैवतर्ष्यादिसयुताः ।
प्रणवाद्यन्तगायत्री शिरस्तस्यास्तथैव च ॥
त्रिरावर्तनमेतस्य प्राणायामो विधीयते ।
भूर्भुवःस्वर्महर्जनस्तपस्सत्य तथैव च ॥

आद्यास्तिस्रो महाप्रोक्ताः सर्वत्रैतत्प्रवर्तते ।
अग्निर्वायुस्तथासूर्या बृहस्पत्याप एव च ॥
इन्द्रश्च विश्वेदेवाश्च देवताः समुदीरिताः ।
गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप्च जगती चैव छन्दांस्येतान्यनुक्रमात् ।
भरद्वाजः कश्यपश्च गैातमोऽत्रिस्तथैव च ॥
विश्वामित्रो जमदग्निर्वसिष्ठ ऋषयः क्रमात् ।
ओमापोज्योतिरित्येतच्छिरस्तस्मात्प्रयुज्यते ॥
आपोहिष्ठादि जल्पन्ति छन्दो देवर्षिसंयुतम् ।
सिन्धुद्वीप ऋषिः छन्दो गायत्रमृतु तिसृषु ॥
आपो हि देवताः प्राहुरापोहिष्ठादिषु द्विजाः ।
आपोहिष्ठेति च ऋचां पादाच्यक्षरा न च ॥
पादान्ते तु क्षिपेद्वारि पादमध्ये च निःक्षिपेत् ।
भूमौ मूर्ध्नि तथाकाशे मूर्ध्याकाशे तथा भुवि ॥
आकाशे भुवि मूर्ध्नीति मार्जनं तु विधीयते ।
अत्रोपस्पर्शने नेत्र प्रातः किं चित्पवन्ति हि ॥
सूर्यश्चमेति मध्याह्ने पुनन्त्वापो विपर्ययम् ।
मन्त्राभिमन्त्रितं कृत्वा कुशपूत तथा जलम् ॥
आचम्य विधिवद्धीमान् सन्ध्योपासनमारभेत् ।
जलपूर्णं तथा हस्त नासिकाग्रे समर्पयेत् ॥
ऋतं चेति पठित्वा तु तद्वारि भुवि निक्षिपेत् ।
अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणः ॥
छन्दोऽत्रानुष्टुभं प्राहुरापश्चैव तु दैवतम् ।
जलेनाञ्जलिमापूर्य गायत्रीं मनसा स्मरन् ॥
निक्षिपेत् पूर्वमुद्धम्य पतिता बिन्दवः पुनः ।
वज्रो भूत्वा ययुस्ताश्च मद्वेहाद्ध घ्नन्ति राक्षसान् ॥
प्रदक्षिणप्रक्रमेण पापं धुन्वन्ति भूसुराः ।
कालत्रयेऽपि तं ध्यात्वा सकलं भद्रमश्नुते ॥ इति ।

ध्यानस्वरूपमाह श्रुतिः ।

असावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति एवं वदेति ।

अथसन्ध्याप्रधानजपविधिः । कौर्मे ।

ओङ्कारव्याहृतियुतां गायत्रीं वेदमातरम् ।
जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः ॥
प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः ।
प्राणायामत्रयं कृत्वा ध्यायेत्सन्ध्यामिति श्रुतिः ॥
ध्यात्वार्क्कमण्डलगतां सावित्रीं वै जपेद्बुधः ।

न्यासविधिमाह व्यासः ।

हृदि तत्सवितुर्न्यस्य न्यसेन्मूर्ध्नि वरेणियम् ॥
भर्गोदेवस्येति पदं शिखायां च ततो न्यसेत् ।
धीमहीति न्यसेद्वर्म धियोयोनश्च नेत्रयोः ॥
प्रचोदयादिति पदमस्त्रार्थं विनियोजयेत् ।

गायत्र्याश्चर्ष्याद्युक्ता बृहत्पराशरेण ।

दैवत्यमस्यां सविता सुरार्च्यश्छन्दोऽपि गायत्रमभूच्च तस्याम् ।
विश्वस्य मित्रो द्विजराजपूज्यो मुनिर्नियोज्यस्तु जपादिकेषु ॥

जपसङ्ख्यामाह यमः ।

सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं प्रजपेन्नित्यं सर्वपापप्रणाशनीमिति ॥

व्यासोऽपि ।

अष्टोत्तरशतं नित्यमष्टाविंशतिमत्र वा ।
विधिना दशकं वापि त्रिकालेषु जपेद्बुधः ॥

जपानन्तरमर्क्कोपस्थानं कार्यम् ।
तदाह कूर्मः ।

अथो मतिष्ठेदादित्यमुदुत्यन्तं समाहितः ।
मन्त्रैस्तु विविधैः सौरैः ऋग्यजुःसामसम्भवैः ॥ इति ।

ऋग्यजुःसामसम्भवैरिति स्वस्वशाखीयमन्त्रप्रदर्शनार्थम् । न त्वेकस्य सर्वमन्त्रप्राप्त्यर्थम् । "उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेदि"ति वसिष्ठस्मरणात् । अयमेव विधिः स्वल्पः सन्ध्यात्रयेऽपि वेदितव्यो

मन्त्रास्तु प्रतिपदोक्ता ग्राह्याः । तत्र मध्याह्नसन्ध्याया विशेषं द्वितीयाध्याये वक्ष्यामः । सायंसन्ध्यायां त्वयं विशेषः । तत्र भरद्वाजः ।

सायमग्निश्चमेत्युक्त्वा प्रातः सूर्यस्त्वपः पिबेत् ।
आपः पुनन्तु मध्याह्ने तैरेवाचमनं चरेत् ॥ इति ।

उपस्थाने विशेषमाह नारायणः ।

वारुणीभिरथादित्यमुपस्थाय प्रदक्षिणम् ।
कुर्वन् दिशो नमस्कुर्याद्दिगीशांश्च पृथक् पृथगिति ॥

वारुण्यः इमं मे वरुणेत्याद्याः । यद्यपि वारुणीनां वरुणोपस्थान एव विनियोगो युक्तस्तथापि आदित्योपस्थान एव श्रुत्या विनियुज्यन्ते लिङ्गस्य दौर्बल्यात् । ऐन्द्र्या गार्हपत्योपस्थानवद् इति न विरोधः ॥

अथ होमविधिः । तत्र दक्षः ।

सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते ।
स्वयं होमे फलं यत्स्यात्तदन्येन न लभ्यते ॥

स च होमः श्रौतः स्मार्तश्च श्रौतोऽग्निहोत्रहोमः स्मार्त औपासनहोमः । तदाह याज्ञवल्क्यः ।

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते वापि श्रौतं वैतानिकाग्निष्विति ॥

तत्रोभयोः सद्भावेऽनुष्ठानक्रममाह ।

होमं वैतानिकं कृत्वा स्मार्तं कुर्याद्विचक्षणः ।
स्मृतीनां वेदमूलत्वात्स्मार्तं केचित्पुराविदुः ॥

श्रौतकर्माशक्तौ स्मार्त्तमात्रं कर्तव्यम् । तदाह व्यासः ।

श्रौतं कर्म न चेच्छक्तः कर्तुं स्मार्तं समाचरेत् ।
तत्राप्यशक्तः करणे सदाचारं लभेद् बुधः ॥

सदाचारः स्नानसन्ध्यादिस्तावन्मात्रमेव अनुतिष्ठेत् । शक्तस्य तु श्रौतपरित्यागे प्रत्यवायमाह गर्गः ।

यो वैदिकमनादृत्य कर्म स्मार्तैतिहासिकम् ।
मोहात्समाचरेद्विप्रो न स पुण्येन युज्यते ॥

स्वयं होमाशक्तौ प्रतिनिधिमाह शातातपः ।

श्रौतं यस्यात्स्वयं कुर्यादन्योऽपि स्मार्तमाचरेत् ।
अशक्तौ श्रौतमप्यन्यः कुर्यादाचारमन्ततः ॥

आचारः स्नानसन्ध्यादिस्तमप्यन्यः कुर्यात् ॥

अन्यपदार्थमाह दक्षः ।

ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एतैरपि हुतं यत्तु तद्धुतं स्वयमेव तु ॥

अन्यहोमेऽपि दम्पतीसान्निध्येन भाव्यं तदाह कात्यायनः ।

असमक्षं तु दम्पत्योर्होतव्यं नर्त्विगादिना ।
द्वयोरप्यसमक्षं तु भवेद्धुतमनर्थकम् ॥

होमकालमाहापस्तम्बः, उषस्युपोदयं समाविधित उदिते प्रातरिति । पञ्चधा विभक्तस्य दिनस्याद्यो भागः प्रातः स एवात्रोपयुज्यते पूर्वोक्तन्यायात् कालान्तरं तु यथोपक्रमविषयम् ।

सायंहोमकालमाह कात्यायनः ।

यावत्सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।
लोहिततत्वं च नापैति तावत्सायं तु हूयते ॥ इति ।

उभयत्र गौणकालमहाश्वलायनः । सङ्गवान्तः प्रातः प्रदोषान्तः सायमिति । होमद्रव्यमाह नारायणः ।

पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः ।
सोमो मांसं तथा तैलमापस्तानि दशैव तु ॥

मांसं तु स्मार्तातिरिक्ते होम्य च मांसं वर्ज्यमित्याश्वलायनस्मरणात् । होमसाधनमाह । स एव "द्रवं हविः स्रुवेणैव पाणिना कठिनं हविरिति ।

आहुतिपरिमाणमाह बौधायनः ।

व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते ।
तिलानां तु तदर्धं स्याच्छ्रुवमात्रं घृतस्य तु ॥

विशेषेतिकर्तव्यता तु स्वस्वगृह्योक्ता ग्राह्या "स्वगृह्योक्तेन विधिना होमं कुर्याद्यथाविधी"ति परिशिष्टात् ।

अथ देवार्चनविधिः । तत्र मूलवचने देवतानामिति सामान्यापादानेऽपि कलौ हरिहरचण्डीविनायकसूर्याः पूज्याः । बहुवचनसामर्थ्याद्विशेषविहितत्वाच्च । तथा च महाभारते ।

कलौ कलिमलध्वंसं सर्वपापहरं हरिम् ।
येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः ॥

स्कान्देऽपि ।

ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः ॥
द्वापरे भगवान्विष्णुः कलौ देवो महेश्वरः ।

यद्यप्यत्र विधिर्न श्रूयते तथापि प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्यत्र रात्रिपर्यायेण ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरितिवद्धरिवद्वन्द्यत्वकामाः कलौ हरिमर्चयुरित्यसौ कल्पनीयः । तथा 'कलौ चण्डीविनायकावि"त्यत्रापि ज्ञेयम् । तच्च देवार्चनं यद्यपि

अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥

इत्याद्याग्नेयादिवाक्यैरनेकत्र प्रतीयते तथापि कलौ शालग्रामशिलायामवश्यं कार्यम् ।

कामासक्तोऽथ वा क्रुद्धः शालग्रामशिलार्चनात् ।
भक्त्या वा यदि वाभक्त्या कलौ मुक्तिमवाप्नुयात् ॥
वैवस्वतभयं नास्ति तथा न कलिजं भयम् ।
यः कथां कुरुते विष्णोः शालग्रामशिलाग्रतः ॥
शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते ।
महापूजां तु कृत्वादौ पूजयेत्तं ततो बुधः ॥

इत्यादिस्कन्दवाक्यात् । तथा शिवपूजनमपि कलौ लिङ्गे वा स्थण्डिले वा कार्यम् ।

तथा च महाभारते ।

सदा तं यजते यस्तु श्रद्धया मुनिपुङ्गव ।
लिङ्गे वा स्थण्डिले वाऽपि शङ्करं विधिपूर्वकम् ॥
युगदोषं विनिर्जित्य रुद्रलोके प्रमोदते ॥ इति ।

युगं कलिस्तस्यैव सदोषत्वात् । लिङ्गं बाणलिङ्गं तस्य स्वतःसिद्धत्वात् । तथा भविष्ये ।

बाणलिङ्गानि राजेन्द्र ख्यातानि भुवनत्रये ।
न प्रतिष्ठा न संस्कारस्तेषामावाहनं तथेति ॥

तत्र प्रतियुगं विष्णुमूर्त्तिभेद उक्तो वाराहे ।

कृते नारायणः शुद्धः सूक्ष्ममूर्तिरुपासते ।
त्रेताया विष्णुरूपेण वासुदेवश्च द्वापरे ॥
कृष्णवर्णः कलौ कृष्णः साङ्गोपाङ्गः सपार्षदः ।
पूज्यते मनुजै राजन् श्रेयसामीश्वरो हरिरिति ॥

अत्र नारायणादिदेवताकमन्त्राद्युपादानमनेनोक्तं तेन कलौ कृष्णदैवत्यमन्त्रेण तन्मन्त्रध्येयरूपः शालग्रामे कृष्णः पूज्यः । तत्रापि प्रतिवर्णं शालग्रामशिलाभेदो हेमाद्रौ शालग्रामशिलामाहात्म्ये अभिहितः ।

ब्राह्मणैर्वासुदेवस्तु नृपैः संकर्षणस्तथा ।
प्रद्युम्नः पूज्यते वैश्यैरनिरुद्धस्तु शूद्रजैरिति ॥

ब्राह्मणैर्वासुदेवादिलक्षणोपेतायां शालग्रामशिलायां कृष्णः पूज्य इत्यर्थः । तल्लक्षणं तु विष्णुधर्मोत्तरे ।

पञ्चचक्रो वासुदेवः षड्भिः प्रद्युम्नकः स्मृतः ।
सङ्कर्षणः सप्तचक्रोऽनिरुद्ध एकादशैः स्मृतः ॥

संख्याविशेषोऽप्युक्तस्तत्रैव ।

चत्वारो ब्राह्मणैः पूज्यास्त्रयो राजन्यजातिभिः ।
वैश्यैर्द्वावेव सम्पूज्यौ तथैकः शूद्रजातिभिरिति ॥

तच्चैवं मूर्त्यन्तराणां संख्यान्तराणां वानर्थक्यं, काम्यपूजायामुपादानात् ।

यत्तु

एकमूर्तिर्न पूज्यैव गृहीणा बुद्धिमिच्छता ।
अनेकमूर्त्तिसम्पन्नः सर्वकामानवाप्नुयादिति ॥
शालग्रामाः समाः पूज्या विषमा न कदा च न ।
समेषु द्वितयं नैव विषमेष्वेक एव हीति ॥

तत्संख्याविधिवाक्यैकवाक्यतया व्यवस्थाप्यम् । यथाविशेषविहितसंख्यायाः प्राबल्येन तदेकवाक्यतया तद्भिन्नविषयतया वा निषेधो व्यवस्थाप्य इति ।

ननु

शालग्रामशिलां वापि चक्राङ्कितशिलां तथा ।
ब्राह्मणः पूजयेन्नित्यं क्षत्रियादिर्न पूजयेत् ॥

इति विष्णुधर्मोत्तरे ।

प्रणवोच्चारणाच्चैव शालग्रामशिलार्चनात् ।
ब्राह्मणीगमनाच्चापि शूद्रश्चाण्डालतां व्रजेत् ॥

इत्याप्रस्तम्बीये च क्षत्रियादीनां शालग्रामपूजानिषेधेनानुपपन्नमिदमिति चेत् । मैवम् ।

ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि ।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मम ॥

इति लैङ्गवाक्ये उपक्रमोपसंहाराभ्यां विशेष्यसङ्गतैवकारेणान्ययोगव्यवच्छेदाच्च ब्राह्मणमात्रस्यैव स्पर्शवत्पूजायामधिकारो नान्येषामिति विशेषेण पूजामात्रनिषेधस्य सामान्यस्योपसंहारात् । यथाग्नेयं चतुर्द्धा करोतीति विशेषेण पुरोडाशं चतुर्द्धा करोतीति सामान्यस्योपसंहार इति ।

अत एव बृहन्नारदीये ।

स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर ।
स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य वा ॥
शूद्रो वानुपनीतो वा स्त्री वापि पतितोऽपि वा ।
केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते ।

इत्यनास्थया प्रत्येकं वा शब्देन क्षत्रियादीनामप्युपसंग्रहः । यद्येवं

समाचारविरोधस्तर्हि क्षत्रियादिरित्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा शूद्रादेरेव ग्रहणमस्तु । अत एव पाद्मे ।

ब्राह्मणक्षत्रियवैश्यानां त्रयाणां मुनिसत्तमाः ।
अधिकारः स्मृतः सद्भिः शालग्रामशिलार्चने ॥
स्त्रीशूद्रपतितादीनां षण्णां नीचविकर्मिणाम् ।
नैवाधिकारो विज्ञेयः शालग्रामशिलार्चने ॥
दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः ।
कर्तव्य ब्राह्मणद्वारा शालग्रामशिलार्चनम् ॥

इति स्पष्टं शूद्रादीनामेव ब्राह्मणद्वारा पूजाभिहितेत्यलं विस्तरेण ।

अथ पूजोपकरणानि । विष्णुधर्मोत्तरे ।

कलौ यच्छन्ति ये विष्णोस्तुलसीकाष्ठचन्दनम् ।
विष्णुप्रीतिकरं मर्त्या उत्तरा यान्ति ते भुवम् ॥
ये हि भागवता भूत्वा कलौ तुलसिचन्दनम् ।
नार्पयन्ति सदा विष्णोर्न ते भागवता नराः ॥
महाविष्णोः कलौ भक्त्या दत्वा तुलसिचन्दनम् ।
योऽर्चयेन्मालतीपुष्पैर्न भूयस्तनयो भवेत् ॥

स्कान्दे ।

अहो मुष्टास्ते नष्टास्ते पतिताः कलिकन्दरे ।
यैर्नाऽर्चितो हरिर्भक्त्या कमलैरसितैः सितैः ॥

पाद्मे ।

कार्तिके केतकीपुष्पं येन दत्तं हरेः कलौ ।
दीपदानं च देवर्षे तारितं तेन वै कुलम् ॥
अहो तुष्टा विनष्टास्ते पतिताः कलिकन्दरे ।
यैर्नार्चितो हरिर्भक्त्या कलमैः कार्तिके शुभैः ॥

स्कान्दे ।

ये कृष्णागरुणा कृष्णं धूपयन्ति कलौ नराः ।
सकर्पूरेण राजेन्द्र कृष्णतुल्या भवन्ति ते ॥

पाद्मे ।

कलौ गव्यघृतेनाथ तिलतैलेन वा पुनः ।
दीपदानं च यैर्दत्तं तारितं तैस्तु तत्कुलम् । इति ॥

पाद्मे ।

द्वारकाशैलसम्भूतं यश्चापं पिबते कलौ ।
पापानि तस्य नश्यन्ति शतजन्मार्जितान्यपि ॥
धृते शिरसि पीते च सर्वास्तुष्यन्ति देवताः ।
प्रायश्चित्तं हि पापानां कलौ पादोदकं हरेरिति ॥

अत्र द्वारावतीशिलासम्बन्धितोयपानविधानात् सापि कलौ शालग्रामवद्विशेषतः पूज्येति गम्यते ।

पाद्मे ।

दिवारात्रिकृतं पापं यत् किञ्चित् पूर्वजन्मभिः ।
तत्सर्वं विलयं याति माहात्म्यपठनात् कलौ ॥

माहात्म्यमिति सामान्योपादानेऽपि सहस्रनामस्तोत्रं पठनीयम् ।

तदुक्तं स्कान्दे ।

विष्णोर्नाम सहस्रं च कलिकाले पठेत्तु यः ।
वेदानां च पुराणानां फलमाप्नोति मानवः ॥

कलौ कर्मणां न्यूनातिरिक्ततापरिहारकं हरिस्मरणमेव ।

तदुक्तं बृहन्नारदीये ।

न्यूनातिरिक्ततासिध्यै कलौ वेदोक्तकर्मणाम् ।
हरिस्मरणमेवात्र सम्पूर्णफलदायकम् ॥

अथ पूजेतिकर्तव्यता आग्नेये ।

अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः ।
यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुयुः ॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपादे च चतुर्थीं दक्षिणे न्यसेत् ॥

पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत् ।
सप्तमीं वामऊर्व्या तु अष्टमीं दक्षिणे तथा ॥
नवमीं नाभिमध्ये तु दशमीं हृदये तथा ।
एकादशीं करमध्ये द्वादशीं वामबाहुके ॥
त्रयोदशीं दक्षिणे तु तथैवास्ये चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं चैव विन्यसेत् मूर्ध्नि षोडशीम् ॥
यथा देहे तथा देवे न्यासं कृत्वा विधानतः ।
न्यासेन तु भवेत्सोऽपि स्वयमेव जनार्दनः ॥
एवं न्यासविधिं कृत्वा पाद्याद्यङ्गं समाचरेत् ।
पूर्वयावाहयेद्देवमासनं तु द्वितीयया ॥
पाद्यं तृतीयया चैव चतुर्थ्यार्घ्यं प्रदापयेत् ।
पञ्चम्याचमनं दद्यात् षष्ठ्या स्नानं समाचरेत् ॥
सप्तम्या तु ततो वासोऽप्यष्टम्या चोपवीतकम् ।
नवम्या गन्धमेवं तु दशम्या पुष्पकं तथा ॥
एकादश्या तथा धूपं द्वादश्या दीपमेव हि ।
नैवेद्यं तु त्रयोदश्या नमस्कारे चतुर्दशी ॥
प्रदक्षिणे पञ्चदशी वर्जने षोडशी तथा ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं तथा ॥
हुत्वा षोडषभिर्मन्त्रैः षोडशाज्यस्य चाहुतीः ।
पुनः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि षोडश ॥
तच्च सर्वं जपेद्बुधः पौरुषं सूक्तमुत्तमम् ।
षण्मासात्सिद्धिमाप्नोति ह्येवमेव समर्चयन्निति ॥

ननु शालग्रामादावाहनविसर्जनयोरभावात् कथं षोडशोपचाराः कथं वा षोडशर्चविनियोगस्तत्र

शालग्रामार्चने नैव आवाहनविसर्जने ।
शालग्रामे हि भगवानाविर्भूतः सदा हरिः ॥

इति स्कान्दवाक्यात् । प्रतिमास्थानेष्वप्स्वग्नावावाहनविसर्जनवर्ज्जं सर्वं समानमिति बौधायनस्मरणाच्चेति चेत् । सत्यम् । तयोः स्थाण्डिलादिविषयत्वात् । तथा च भागवते ।

उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ।
अस्थिराया विकल्पः स्यात्स्थण्डिले च भवेद्वयमिति ॥

ऋग्विनियोगस्तु तत्स्थानापन्नपुष्पाञ्जलौ ।

तथा च मन्त्रराजानुष्टुब्विधाने ।

आवाहनऋचा दद्यात्पूर्वं पुष्पाञ्जलिं हरेः ।
तस्यैवोन्मुखताप्राप्त्यै यागे चोद्वासने ऋचा ॥
अन्ते पुष्पाञ्जलिं दद्याद्यागसम्पूर्तिसिद्धय इति ।

तथा स्नानमपि प्रतिमादिभिन्नविषयः । तदाह व्यासः ।

प्रतिमापटयन्त्राणां नित्य स्नानं न कारयेत् ।
कारयेत्पर्वदिवसे यथा मलनिवारणमिति ॥

वस्त्रोपवीतालङ्काराणां न प्रतिदिनमपूर्वत्वनियमः । अभ्युक्षणाच्छुद्धिरपर तु दिने दिन इति तत्त्वसागरसंहितास्मरणात् । उपवीतालङ्कारयोश्च वस्त्रसमानत्वात् ।

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठन्ति देवताः ।
न निर्माल्य भवेत्तावद्वस्त्रस्त्रविभूषणम् ॥

इति विद्याकरस्मरणाच्च । अपरं तदेव प्रतिदिनं प्रोक्षणाच्छुद्धेदित्यर्थः । शालग्रामेण सह लिङ्गपूजने न शिवनिर्माल्यदोषः ।

तथा स्कान्दे ।

अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामस्य संसर्गात्सर्वं याति पवित्रतामिति ॥

अथ वैश्वदेवविधिः ।

स च स्वशाखोक्तितिकर्त्तव्यतया कर्तव्यः । तदाह व्यासः

वैश्वदेवं प्रकुर्वीत स्वशाखाविहित ततः ।
संस्कृतान्नैर्हि विविधैर्हविष्यव्यञ्जनान्वितैः ॥
तैरेवान्नैर्बलिं दद्याच्छेषमाप्लाव्य वारिणा ।
कृतापसव्यः स्वधया सर्वं दक्षिणतो हरेदिति ॥

ततो देवार्चनानन्तरमित्यर्थः । व्यञ्जनं तत्र घृतं न तु क्षारादि "जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितमिति" तेनैवाभिधानात् । स च गृह्य लौकिके वाग्नौ कार्यः ।

शालाग्नौ लौकिके वापि जले भूम्यामथापि वा ।
वैश्वदेवस्तु कर्तव्यो देवयज्ञः स वै स्मृतः ॥

इतिकूर्मस्मरणात् । अत्र गृह्यलौकिकाग्न्योरैच्छिको विकल्पः ।

औपासने तु होतव्यं शालाग्नौ वा विजानता ।
विकल्पस्त्विच्छया कार्यो नास्त्येवात्र व्यवस्थितिः ॥

इति शौनकस्मरणात् । शालाग्निरत्र लौकिकजातकर्मादिसिध्यर्थं यो व्याहृतिभिराहृतः । "सोऽग्निः पौरुष इत्युक्तः शालाग्निर्लौकिकस्तथे"ति तेन परिभाषणात् ।

ननु शालाग्नौ वा पचेदन्नं लौकिके वापि नित्यशः । यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयत इत्याङ्गिरसा पाकव्यवस्थयैव होमव्यवस्थाभिधानात्कथमैच्छिको विकल्प इति चेत् । मैवम् । अमावास्यायां शान्तिकर्म कुर्वीतेत्यादिना आश्वलायनेन पचनाग्नेर्नियमितत्वेनाग्न्यन्तराप्राप्त्यैव तच्छाखीयान् प्रत्यस्य व्यवस्थापकत्वाभावात् । एतेनैव जातीयकान्यन्यान्यपि वाक्यानि व्याख्यातानि । सूत्रस्यासाधारणकर्मस्वरूपनिर्वाहकमन्त्रेतिकर्तव्यताप्रतिपादनेनाभ्यर्हितत्वात् । अत एवाह देवलः ।

मन्वादयः प्रयोक्तारो धर्मशास्त्रस्य कीर्तिताः ।
तत्प्रयुक्तप्रयोक्तारो गृह्यकाराः स्वमन्त्रत इति ॥

न चैषा निर्विशेषत्वम् । छन्दोगकात्यायनादिसूत्रपरिशिष्टसमानार्थतया तत्र सम्बन्धात् । अत एव वैश्वदेवमित्युपक्रम्य यज्ञत्रयमुक्तं व्यासादिभिः । तत्र होमो देवयज्ञो बलिर्भूतयज्ञः स्वधाकारः पितृयज्ञः ।

अत्र के चित् । स्वधाकारेणैव पितृयज्ञसिद्धेरन्वहं नित्यश्राद्धार्थं ब्राह्मणभोजनं न कार्यमेककार्यत्वादिति । तदपरे न सहन्ते तथा हि पितृभ्य इति सामान्योपादानाद्दिव्यपितृदेवताकमिदं निनयनं तत्र च जीव-

त्पितृकस्याप्यधिकारो निषेधाभावाद्वैश्वदेवविधिना वैश्वदेवशब्दोपात्तदेवभूतपितृयज्ञानां विधानाच्च। नित्यश्राद्धं तु मानुषपितृदेवताकम्।

नित्यश्राद्धं तु यन्नाम दैवहीनं तदुच्यते।
तत्तु षाट्पुरुषं ज्ञेय दक्षिणापिण्डवर्जितम्॥

इति वचनात्। तथा च देवताभेदान्न निनयनेन श्राद्धसिद्धिः। किं च यदि निनयनमात्रेण नित्यश्राद्धसिद्धिः स्यात्तर्हि ऋग्विधाने कर्मद्वयाकरणे पृथक्प्रायश्चित्तविधानं नोपपद्येत तथा हि

यस्त्रिंशति जपेत्सूक्त त्रिवारं तु यदा द्विजः।
वैश्वदेव विना भुङ्क्ते तदा पापात्स मुच्यत इति॥

तथा।

आर्चवत्र जपेन्मन्त्रं दशवारं तदा द्विजः।
नित्यश्राद्धं यदा न्यूनं कुरुते नात्र संशय इति॥

वैश्वदेवशब्देन कर्मत्रयमुच्यत इत्युक्तमेवेति। तच्चिन्त्यम्।

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा॥

इति कात्यायनेन त्रयाणामपि पितृयज्ञत्वोपदेशादन्यतरेणापि तत्सिद्धेः।

यत्तु पृथक्प्रायश्चित्तविधानं तन्नित्यश्राद्धवैगुण्ये न त्वकरणे न्यूनपदेन वैगुण्यस्यैवाभिधानात्। अकरणे तु पूर्वोक्तमेवेति तस्मात्सुष्ठूक्तं स्वधाकारेणैव पितृयज्ञसिद्धेर्नित्यश्राद्धार्थं ब्राह्मणभोजनं नावश्यकमिति। अत एव देवलस्तस्य यथाश्राद्धमनेककालतामाह।

एतेन विधिना श्राद्धं कुर्यात्संवत्सरं सकृत्।
त्रिश्चतुर्वा यथा श्राद्धं मासे मासे दिने दिने इति।

एवं दर्शश्राद्धमप्यशक्तैः संवत्सरमध्ये सकृदेव कार्यम्। "मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकमि"त्याश्वलायनस्मरणात्। स चायं वैश्वदेवः सिद्धस्य हविष्यस्य तु जुहुयादित्यनेनान्नसंस्कारस्तानेतान् यज्ञानहरहः कुर्वीते"त्यनेन पुरुषसंस्कारश्चेति। यत्तूभयरूपतायां परस्परविरोधो

यथा अन्नसंस्कारत्वे ह्यन्नस्य प्राधान्यं वैश्वदेवस्य गुणता पुरुषार्थत्वे तु तद्विपर्ययस्तथा चैकस्यैव गुणत्वं प्रधानत्वं च विरुद्धमिति तत्संयोगपृथक्त्वन्यायेनैव परिहृतम् । यथा एकस्यैव दध्नः क्रत्वर्थत्वे गुणत्वं क्रतोश्च प्राधान्यं पुरुषार्थत्वे तु विपर्यय इति । यच्चान्नसंस्कारत्वपक्षे प्रतिपाकमावृत्तिः स्यात् "प्रतिप्रधानं गुणावृत्तिरिति" न्यायात् । तत्पुरुषार्थत्वेऽपि तुल्यम् । प्रतिपुरुषमावृत्तिप्रसङ्गात् । अथ यद्येकस्मिन्काले बहुधान्नं पच्येत गृहपतिर्महानसादेवैनं कुर्वीतेति गोभिलादिवाक्यात्तन्निवृत्तिस्तर्हि यद्येकस्मिन्काले पुनः पुनरन्नं पच्यत सकृदेव बलिं कुर्वीतेत्यस्यैव पूर्ववाक्यात्तन्निवृत्तिरपि प्रतीयताम् । किञ्च ।

वैश्वदेवमपि प्रोक्तं पूर्वैरेव मनीषिभिः ।
अन्नस्य चात्मनश्चैव संस्कारार्थं तदिष्यते ॥

इति शौनकेनोभयार्थत्वस्य स्पष्टीकरणात्क्व विचारावसरः । तच्च सायंप्रातः कर्तव्यम् । "अथ सायंप्रातःसिद्धस्य हविष्यस्य जुहुयादि"त्याश्वलायनस्मरणात् । सायंप्रातःकरणाशक्तौ प्रातरेव द्विरावृत्त्या सह वा कार्यं यथोक्तं तेनैव ।

प्रातरेव द्विरावृत्त्य कुर्याद्वा सह तद्द्विजः ।
सायं वा द्विज भुञ्जीयान्न कृत्वा जात्वपि स्वयमिति ॥

अथातिथ्यम् । तदेव च मनुष्ययज्ञः । नृयज्ञोऽतिथिपूजनमिति कात्यायनस्मरणात् । यद्ब्राह्मणेभ्योऽन्नं ददाति स मनुष्ययज्ञः सन्तिष्ठत इति श्रवणाच्च ।

तत्र भोजनीयस्यातिथेर्लक्षणमाह ।

**इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।**
**सम्प्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥ ४० ॥**

इष्टः सख्यादिः "भोजयेच्चागतान् काले सखिसम्बन्धिबान्धवानि"ति याज्ञवल्क्यस्मरणात् । द्वेष्योपादानं तु ।

काममभ्यर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥

इति मनूक्तनिन्दापरिहाराय। तथैव मूर्खोपादानमपि। "नष्टाशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते। दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतमि"ति स्मृत्यन्तरोक्तनिन्दापरिहाराय। पण्डितः सदसद्विवेककुशलः।

श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम्॥

इति मनुस्मरणात्। अत्र वैश्वदेवशब्देन दैवभूतपितृयज्ञा उच्यन्ते। "तस्माद्देवपितृभूतेभ्यो दत्वोदीचेतागोदहनादि"ति हारीतस्मरणात्। तेषामन्ते घटिकापादमात्रे काले "मुहूर्त्तस्याष्टमं भागं निरीक्ष्यो ह्यतिथिर्भवेदि"ति मार्कण्डेयस्मरणात्। सम्प्राप्तः समागतस्तथा च तस्मिन् काले समागमनमेवातिथिलक्षणं नेतरद्विद्यादीत्युक्तं भवति। सङ्क्रम्यते अनेन सङ्क्रमः स्वर्गस्य सङ्क्रमः स्वर्गसङ्क्रमः स्वर्गप्राप्तिहेतुरिति यावत्। तथाचाश्वमेधिके।

क्षुत्पिपासाश्रमार्त्ताय देशकालागताय च।
सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छतेति॥

तस्यैव लक्षणान्तरमाह।

**दूराध्वोपगतं श्रान्तं वैश्वदेव उपस्थितम्।**
**अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः॥ ४१॥**

दूरश्चासावध्वा च दूराध्वा तस्मादुपागत श्रान्त क्षुत्तृष्णाश्रमकर्षितम्।

आदूरादाशया प्राप्तः क्षुत्तृष्णाश्रमकर्षितः।
यः पूज्यतेऽतिथिः सम्यगपूर्वः क्रतुरेव सः॥

इति व्यासस्मरणात्। आदूरादतिदूरादाङोऽतिशयार्थत्वात्। वैश्वदेव उपक्रम्यमाणे न वैश्वदेवान्ते सम्प्राप्तो वैश्वदेवान्त इत्यनेन पौनरुक्त्यात्।

मध्याह्ने समये चैव वैश्वदेवे हुतेऽपि च।
अतिथिस्त्वेव सम्प्राप्तपांसुपादं समागतम्॥

ननु यथोक्तप्रायश्चित्तानुष्ठाने कुतो न व्यहार्यतेत्यत आह ।

**यत्पापं ब्रह्महत्यायां द्विगुणं गर्भपातने ।**
**प्रायश्चितं न तस्याः स्यात्तस्मात् त्यागो विधीयते ॥२०॥**

यद्ब्रह्महनने पापं तद्गर्भपातने द्विगुणं भवति ब्राह्मणगर्भविषयमेतत् । ब्रह्महत्यापापद्वैगुण्याभिधानात् ततश्चायमर्थः । यत्र गर्भत्व न तत्र ब्राह्मण्य यथा क्षत्रियगर्भे, यत्र ब्राह्मण्य न तत्र गर्भत्वं यथा त्यवे, ब्राह्मणगर्भे चोभयमपीति परस्परासङ्कीर्णमेकत्र विद्यमानं पापद्वैगुण्यनिमित्तं भवति पृथग्निषेधविषयत्वात् । यथा सवनस्थब्राह्मणवधे 'द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेदिति" तद्द्वैगुण्यात् । अत एव गोगर्भवधेऽप्यङ्गप्रत्यङ्गसपूर्णे द्विगुणं गोव्रतं चरेदिति व्रतद्वैगुण्यं वक्ष्यति । एवं क्षत्रियादिगर्भेष्वप्यूह्यम् । नन्वेवं पापद्वैगुण्य प्रायश्चित्तद्वैगुण्यमस्तु द्विगुणं गोव्रतं चरेदिति न्यायादत आह । तस्या ब्राह्मणादिगर्भघातिन्याः प्रायश्चित्त व्यवहारापादकं नास्ति ।

नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् ।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥

इति योगिस्मरणात् । तस्मात्तस्यास्त्याग एव विधीयते । तथा च योगीश्वरः । गर्भे त्यागो विधीयते गर्भभर्तृवधादौ च तथा महति पातक इति । त्यागश्च धर्मकार्यसम्भोगयोरेव न त्वात्यन्तिकः ।

पतितानामेष एव विधिः स्त्रीणा प्रकीर्तितः ।
वासो गृहान्तिके देयमन्नं वासः सरक्षणम् ॥

इति तस्यैव स्मरणात् । ननु हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेदिति मनुना ब्रह्महत्याव्रतातिदेशात्कथं तदभाव इति चेत् ।

सत्यम् । तस्यामुष्मिकनरकादिनिवर्तकत्वेऽप्यैहिकव्यवहारानापादकत्वात् । तथात्वे त्याग विधिविरोधस्य दुष्परिहरत्वात् । तस्मात्प्रायश्चित्ताचरणेऽपि तस्या व्यवहार्यत्व नास्तीति सर्ववचनानामविरोधः । प्रायश्चित्त च गर्भगतवर्णानुसारेण कल्प्यम् । गर्भहा च यथावर्णमिति

स्मरणात् । एतदप्यनिर्णीतस्त्रिपुल्लिङ्गे । हत्वा गर्भमविज्ञातमिति स्मरणात् । विज्ञाते तु तत्तद्वधनिमित्तमेव । एतदपि स्वपतिनिहितगर्भविषयम् । जारगर्भवधे तु प्रायश्चित्तविशेषश्चतुर्विंशतिमतेऽभिहितः ।

गर्भपाते विनिर्दिष्टं यथावर्णं विधिव्रतम् ।
जारगर्भे विशेषः स्याद्यथोक्तमृषिभिः पुरा ॥
ब्रह्मगर्भवधे कृच्छ्रमब्दं सान्तपनाधिकम् ।
क्षत्रगर्भवधे चैव चरेच्चान्द्रायणद्वयम् ॥
वैश्यस्य चैन्दवं प्रोक्तं पराकः शूद्रघातने ।
प्रायश्चित्तमिदं प्रोक्तं गर्भपाते विशेषतः ॥ इति ।

इदानीं नास्तिक्ये तूपपातके प्रायश्चित्तमुवेतुं तन्निन्दामाह ।

**न कार्यमावसथ्येन नाग्निहोत्रेण वा पुनः ।**
**स भवेत्कर्मचण्डालो यस्तु धर्मपराङ्मुखः ॥ २१ ॥**

यः श्रुतिस्मृत्युक्तधर्मेभ्यः पराङ्मुखस्तेषामैहिकामुष्मिकफलसाधकत्वाभावाङ्गीकारेणाननुष्ठाता स जन्मना ब्राह्मणादिरपि कर्मणा चण्डालो भवेत् यतस्तस्यैवमुक्तिरावसथ्येन स्मार्ताग्निना अग्निहोत्रेण वा न कार्यं न प्रयोजनं प्रत्यक्षेण फलानुपलम्भात् । को हि तद्वेद यदमुष्मिन् लोकेऽस्ति वा नवेति श्रुत्या च संशयाविष्करणात्तत्फलसद्भावे किं प्रमाणमिति । अत्रोचेयं प्रायश्चित्तमाह वसिष्ठः । नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा विरमेन्नास्तिक्यान्नास्तिकवृत्तिस्त्वतिकृच्छ्रमिति । सकृदसकृन्नास्तिक्ये कृच्छ्रातिकृच्छ्रावित्यर्थः । अत्यन्ताभ्यासे तु शंखः । नास्तिके नास्तिकवृत्तिः संवत्सरं ब्राह्मणगृहे भैक्ष्यं चरेदिति ।

नास्तिकनिन्दाप्रसङ्गेन बीजिक्षेत्रिणोः पित्रोरपि तामुवेतुं पुत्रभेदकथने लौकिकौ तौ दृष्टान्तयति ॥

**ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।**
**स क्षेत्री लभते बीजं न बीजी भागमर्हति ॥ २२ ॥**

ओघो जलप्रवाहो वातो वात्या तयोरन्यतरेण परक्षेत्रादाहृतं

शाल्यादिबीजं यस्यान्यस्य क्षेत्रे प्ररोहति स क्षेत्री बीजं बीजजन्यं फलं लभते न तु बीजीति लोके प्रसिद्धमेवेति ।

एव दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह ।

**तद्वत्परस्त्रियाः पुत्रौ द्वौ सुतौ कुण्डगोलकौ ।**
**पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः ॥ २३ ॥**

परेण सङ्गता स्त्री परस्त्री तस्याः परस्त्रियाः सकाशात्परबीजेन सुतावुत्पन्नौ यौ द्वौ कुण्डगोलकौ पुत्रौ तावपि तद्वत्पूर्वोक्तन्यायेन यस्य भार्यायामुत्पन्नौ तस्यैव नोत्पादकस्येति । यथा

गोऽश्वोष्ट्रदासीषु महिष्यजाविकासु च ।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥

इति मनुस्मरणात् । तावेव लक्षयति जीवति पत्यौ जारोत्पन्नः कुण्डः कुण्डसंज्ञः, मृते तस्मिन् जारोत्पन्नो गोलकसंज्ञश्चेति । "अमृते च मृते चैव जारजौ कुण्डगोलकाविति" स्मरणात् । तयोश्च यद्यपि वर्णलक्षणाभावेनासंस्कार्यत्व प्रतीयते तथापि वचनात्संस्कारः कार्यः । तथा च ब्रह्मपुराणे । षण्ढादीनुपक्रम्य "एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकाविति" स्मरणात् । तयोर्मध्ये जारस्य गर्भोत्पादने वक्ष्यमाणपारदार्यप्रायश्चित्ताद्द्विगुण प्रायश्चित्तम् ।

गमने तु व्रतं यत्स्याद्गर्भे तु द्विगुणं भवेदित्युशनःस्मरणात् । क्षेत्रिणस्तु द्वादशान्ते वक्ष्यमाण सामान्य प्रायश्चित्तम्,

चान्द्रायणं यावकं च तुलापुरुष एव च ।
गवा चैवानुगमन सर्वपापप्रणाशनम् ॥

इतिज्ञेयम् । व्यभिचारिण्यास्तु दशमे वक्ष्यति ।

तर्हि बीजिनः कः पुत्र इत्यत आह ।

**औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः ॥**
**दद्यान्मता पिता वापि स पुत्रो दत्तको भवेत् ॥ २४ ॥**

यः क्षेत्रजः स्वक्षेत्रे संस्कृते स्वयमुत्पादितः स औरसः स एव बीजिनो मुख्यः पुत्रस्तदाह मनुः ।

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः ।
तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकमिति ॥

ननु क्षेत्रजः पृथगेव कथं न गण्यते तस्याप्यन्यत्र पुत्रत्वेन परिगणनादिति चेन्नैवम् । कलौ नियोगनिषेधेनैव तस्याप्रसक्तेः ।

क्षेत्रजश्चैव बीजी च द्वावेतौ निरयं गतौ ।
न रक्षति च यो दारान् परदाराश्च गच्छति ॥

इति महाभारते कलिप्रक्रमे निन्दाश्रवणाच्च । तस्माद्यथापूर्वमेव साधीयः । तर्हि तदभावे कथमित्यत आह । दत्त इति दत्तो मातापितृभ्यामन्यतरेण वान्यस्मै । तल्लक्षणमाह मनुः ।

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥ इति ।
आपदि प्रतिग्रहीतुरपुत्रत्वे, सपुत्रत्वे तु तस्यैव दोषः ।
अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिस्तथा ।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥

इत्यत्रिस्मरणात् । आपदि दुर्भिक्षादौ । अनापदि दाने दातुर्दोष इति प्राञ्चः । स च भ्रातृपुत्र एव कार्यः ।

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

इतिमनुस्मरणात् । नेदं यथा श्रुतमर्थवत् । अपुत्रदायाधिकारिक्रमे भ्रातृपुत्राणां पञ्चमस्थानस्थितिविरोधात् । पिण्डाधिकारेऽपि पत्नी भ्राता च तज्जश्चेति तृतीयस्थानस्थितिविरोधाच्च । किं तु पुत्रीकरणे भ्रातृपुत्रस्य सम्भवे नान्यस्येत्येवमर्थम् ।

तथा च बृहत्पराशरः ।

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् ।
स एव तस्य कुर्वीत पिण्डदानोदकक्रियामिति ॥

तस्मात्स एवादौ पुत्रः कार्यः । एवं चैकस्यापि तस्यानेकैरपि भ्रातृभिः

पुत्रीकरणमनेन सिद्धम् । ततश्च न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वेति निषेधस्यात्रानवकाशः । तेनेत्येकत्वनिर्देशात् । तदसम्भवे त्वदूरबान्धव बन्धुसन्निकृष्ट एव प्रतिगृह्णीयादिति च वसिष्ठोक्तो ज्ञेयः । अदूरबान्धवमित्यत्यन्तदेशभाषाविप्रकृष्टस्य निषेधः । तद्धर्मानाह मनुः ।

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ इति ।

अस्यार्थः, दत्तः पुत्रो जनकस्य गोत्ररिक्थे न भजते तन्निमित्तदशाहादि न प्राप्नोतीर्थः । अनेनान्यगोत्रस्यापि पुत्रीकरणमनुज्ञातं पुत्रं ददतश्च जनकस्य दत्तपुत्रकर्तृकस्वधा श्राद्धमपैति दत्तस्य जनकश्राद्धे नाधिकार इत्यर्थः । यतो गोत्ररिक्थानुगः पिण्ड इति । पुत्रान्तराभावे तु तस्यापि रिक्थश्राद्धाधिकारोऽस्त्येव ।

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

इति न्यायसाम्यात् ।

दत्तः पुत्रः पितुः कुर्याज्जनकस्य मृतेऽहनि ।
गङ्गाया च ततोऽन्यत्र न पुत्रान्तरसन्निधौ ॥

इति शातातपस्मरणाच्च । इदमपि दानानन्तरं जनकस्यापुत्रत्वे, दानकाले त्वेकस्य दाननिषेधात् । भ्रातृपुत्रस्य त्वेकस्याप्यनेकपुत्रत्वे विशेषमाहापस्तम्बः । यदि द्विपितास्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति । द्विपितेति द्विपितामहद्विप्रपितामहस्याप्युपलक्षणं न्यायसाम्यात् । द्वौ द्वाविति वीप्साश्रवणाच्च । एवमन्येषामपि द्विपितृकाणां द्रष्टव्यम् । क्षयाहव्यतिरिक्तेषु सर्वश्राद्धेष्वयं विधिर्ज्ञेयः । तस्योभयत्रापि सापिण्ड्यन्त्रिपुरुषमेव ।

दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रिपूरुषम् ।
जनकस्य कुले तद्वद्दौहीतुरिति धारणा ॥

इतिस्मरणात् ।

त्रिपुरुषमात्मानं विहायात्मना सह चतुःपुरुषं ज्ञेयम् ।

त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते ।
चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते ॥

इति मनुस्मरणात् । आपस्तम्बेन प्रपितामहपर्यन्तमेव द्वयोः पिण्डदानस्मरणाच्च । एकत्रावयवान्वयरूपं सापिण्ड्यमपरत्र निर्वाप्य पिण्डान्वयरूपमिति विशेषः । तस्य गोत्रद्वयेऽप्यनुद्वाहः ।

द्व्यामुष्यायणका ये स्युर्दत्तक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथा ॥

इति स्मरणात् ।

तस्य परिवेदनदोषोऽपि नास्ति दत्तत्वात् ।
भिन्नोदरे च दत्ते च पितृव्यतनये तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

इति गौतमस्मरणाच्च । तथा परिवित्तिदोषोऽपि न समत्वात् । तथा मातामहा अपि तस्य प्रतिग्रहीतृमातृपितर एव पितामहन्यायस्य मातामहेष्वपि तुल्यत्वादिति दिक् । तर्हि तस्याप्यभावे कथमित्यत आह कृत्रिमक इति कृत्रिमकः स्वयमेव त्व मे पुत्र इति कृतः । तल्लक्षणमाह मनुः ।

सदृशं तु प्रकुर्याद्यं गुणदोषविवर्जितम् ।
पुत्र पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥ इति ।

एतच्च मातापितृविहीनस्य तदनुज्ञातस्य वा सम्भवति अन्यथा पारतन्त्र्यात् । ततश्चान्योत्पन्नाना मध्ये कलावेतौ द्वावेवाभ्यनुज्ञायेते व्यभिचारोत्पन्नत्वाभावात् । ननु ।

अप्रशस्तास्तु कानीनगूढोत्पन्नः सहोढजः ।
पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः ॥

इति विष्णुस्मरणाद्गूढोत्पन्नः कानीनपौनर्भवसहोढजानां व्यभिचारोत्पन्नत्वेनाप्रशस्तत्वेऽपि पुत्रिकापुत्रक्रीतोत्सृष्टदत्तात्मनामतथात्वेन कुतो न परिगणनमिति चेत् ।

सत्यम् । तथापि दोषान्तरकलङ्कितत्वेनापरिग्रहस्तेषामिति वदामः । तथा हि दत्तायाः कन्यायास्तत्पुत्रस्य वा परिग्रहे फलप्रत्यावृत्तिर्भवति यथा दत्ताया गोः स्वक्षीरादेर्वा प्रत्यावृत्तिरिति सा च निन्दिता वसिष्ठेन । अभ्रातृकाः पुंसः पितॄनभ्येति प्रतीचीनं गच्छति पुत्रत्वमिति अभ्रातृका कन्या प्रतिग्रहीतुः पुंसः सकाशात्स्वरूपेण फलद्वारा वा पितॄनेवाभ्युपैति तेन प्रतीचीनमेव विपरीतमेव पुत्रत्वं प्राप्नोतीति नासावुत्कृष्टेति । क्रीतस्तु क्रयेणैव दुष्टः । तथा हि पुत्रोत्पत्त्यर्थं क्रीताया भार्याया अपि यत्र निन्दितत्वं तत्र किं साक्षात् क्रीतस्य पुत्रस्य वक्तव्यम् । तदुक्तम्

क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः ॥ इति ।

स्वयंदत्तोत्सृष्टयोस्तु मातृपितृपरित्यागनिदानानेकदोषोत्प्रेक्षणादेव दुष्टत्वमिति ।

अत एव मनुः ।

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृतः ॥
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥

इति द्वयोरपि मातापितृपरित्यागेनैव स्वरूपमुदकीर्तयत् । तस्मादुक्तरीत्या अन्योत्पन्नेषु द्वावेव पुत्रावुत्कृष्टावित्याचार्याभिप्रायः सिद्धः । तयोरपि दत्तक एव कलावुत्कृष्ट इत्यभिप्रेत्य तल्लक्षणमाह । यं मातापितरौ दद्यातां दत्तक इति । अनेन च दत्तकलक्षणकरणेन पुत्रप्रतिनिधिषु दत्तकस्यैव मुख्यत्वं नान्यस्येति सूचितम् ।

अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।
न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैः ॥

इति बृहस्पतिस्मरणात् । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रह

इत्यन्यनिषेधाच्च । कृत्रिमपरिगणनं त्वत्र कथं विद्वत्तामाश्रित्येति किं बहुना ।

एवं प्रसक्तानुप्रसक्तं परिसमाप्य प्रक्रान्तं प्रायश्चित्तमेवानुस्मरन्नुपपातके परिवेदने तद्विधातुमादौ तन्निन्दामाह ।

**परिवित्तिः परिवेत्ता च यया च परिविद्यते ।**
**सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥ २५ ॥**

ज्येष्ठेऽनूढे कनीयानुद्वहन्परिवेत्ता ज्येष्ठः परिवित्तिः यया कन्यया परिविद्यते कनीयान्सा परिवेदिनी यश्च तां ददाति पित्रादिः स परिदायी यश्च तत्र याजकस्स परियष्टा ते सा च तौ च ते दातृसहितौ याजको दातृयाजकः स पञ्चमो येषां ते सर्वे नरकभाजो भवन्ति । तथा च हारीतः । ज्येष्ठेऽनिविष्टे कनीयान्निविशन्परिवेत्ता भवति परिवित्तिर्ज्येष्ठः परिवेदिनी कन्या परिदायी दाता परियष्टा याजकस्ते सर्वे पतिता इति । पतिता इत्यत्र नरकेष्विति शेषो योजनीयो वास्तवपातित्ये वक्ष्यमाणप्रायश्चित्तानुपपत्तेः । ज्येष्ठश्च सोदरो विवक्षितः "सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रह"मिति गर्गस्मरणात् । यमयोस्तु ज्येष्ठनिर्णयमाह मनुः ।

जन्मज्येष्ठेषु चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् ।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥ इति ।
यस्यादौ गर्भोत्पत्तिः स ज्येष्ठः । तथा च स्मृत्यन्तरम् ।
यदा विशेद्द्विधाभूतं बीजं शुक्रं परिस्रवत् ।
तदा भवेद्द्विधा गर्भः सूतिर्वेशविपर्ययादिति ॥

इदानीं तत्र प्रायश्चित्तमाह ।

**द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च ।**
**कृच्छ्रातिकृच्छ्रौ दातुस्तु होता चान्द्रायणं चरेत् ॥ २६ ॥**

परिवित्तेर्द्वौ कृच्छ्रौ प्राजापत्यौ शुध्यर्थं चरणीयौ तु शब्दः परिवेत्तुरप्येतत्प्रायश्चित्तप्राप्त्यर्थः ।

अत एव यमः ।

कृच्छ्रौ द्वयोः पारिवित्त्ये कन्यायाः कृच्छ्र एव च ।
अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेदिति ॥

द्वयोः परिवित्तिपरिवेत्रोः कन्यायाः परिवेदिन्याः कृच्छ्रः शोधकः कन्यादातुः कृच्छ्रातिकृच्छ्र', तल्लक्षणमाह याज्ञवल्क्यः । कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिमिति । होता हावयिता याजकः, चान्द्रायणं वक्ष्यमाणलक्षणं चरेदिति। परिवेत्तुः प्रायश्चित्तानन्तरं कर्तव्यमाह वसिष्ठः । "परिविन्दानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्वा पुनर्विशेत तां चैवोपयच्छेतेति" । तस्मै ज्येष्ठाय तामूढां कन्या दत्वा निवेद्य तदनुज्ञातः पुनर्निविशेत पुनरुद्वहेत् कामित्याकाङ्क्षाया तामेवोपयच्छेतेति । अयमेव न्यायो ज्येष्ठकनिष्ठयोराधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे चानुसन्धेयः । अत एव गौतमः । परिवित्तिपरिवेतृपर्याहितपर्याधात्रग्रेदिधिषूपतीना सवत्सरं प्राकृतं ब्रह्मचर्यमिति । अग्रेदिधिष्वादौ विशेषमाह वसिष्ठः । अग्रेदिधिषूपतिः कृच्छ्रन्दुदाशरात्र चरित्वा निविशेत ता चैवोपयच्छेद्दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्वा पुनर्निविशेतेति । अग्रेदिधिषूपतिः कनिष्ठापतिस्ता परित्यज्य प्राजापत्य कृत्वा निविशेत उद्वहेत् । कामित्याकाङ्क्षायां तां चैवेति स्वपरिणीतामेवेति दिधिषूपतिर्ज्येष्ठापतिस्तां तस्मै कनिष्ठापतये पूर्ववद्दत्वा कृच्छ्रातिकृच्छ्रौ कृत्वा पुनः स्वपरिणीतामेवोद्वहेदिति । यत्तु परिवित्तिपरिवेतृकन्यादातृयाजकाना द्वादशरात्रं सक्तुप्राशन ब्राह्मणतर्पण च ता पुनर्भुवमाचक्षते न भूयश्चैनामभिगच्छेदिति सुमन्तुवचने पुनस्तदुपगमननिषेधनं तज्ज्येष्ठस्य कनिष्ठोढाविवाहनिषेधार्थं न कनिष्ठस्यैव स्वोढाविवाहनिषेधार्थं ता चैवोपयच्छेदिति वसिष्ठस्मरणात् ।

ततश्च तस्मै दत्वेत्यनेनोपकल्पनमात्रमिति सिध्यति । एतेन परिवेदिन्यग्रेदिधिष्वादीना भार्यात्वमेव नोत्पद्यते व्युत्क्रमविवाहादिति परास्तम् । तां पुनर्भुवमाचक्षत इति लिङ्गात् अग्रेदिधिष्वादेर्लक्षणमाह देवलः ।

ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृतेति ।

चकारात् पितृष्वस्रादिदुहितृपरिणयनेऽपि स्मृत्यन्तरोक्तं प्रायश्चित्तमभ्यनुज्ञातम् । तदाह सुमन्तुः । पितृस्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयां विवाह्य चान्द्रायणं चरेत् परित्यज्यैनां बिभृयात् । शातातपोऽपि ।

परिणीय सगोत्रां तु समानप्रवरां तथा ।
कृत्वा तस्यास्तु संसर्गमतिकृच्छ्रं समाचरेत् ॥
मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेदिति ॥

व्युत्क्रमविवाहे तु प्रायश्चित्तमाह शातातपः । ब्राह्मणो राजन्यापूर्वा द्वादशरात्रं चरित्वानिविशेत तां चैवोपयच्छेद् वैश्यापूर्वस्तप्तकृच्छ्रं शूद्रापूर्वा कृच्छ्रातिकृच्छ्रमिति । राजन्यापूर्वा अकृतब्राह्मणीविवाह एव राजन्यां परिणीतेत्यर्थः । एवमन्यत्राप्यूह्यम् । तां चैवोपयच्छेदिति परिवेदनेन व्याख्यातम् ।

उक्तस्य परिवेदनप्रत्यवायस्य क्वचिदपवादमाह ।

**कुब्जवामनषण्ढेषु गद्गदेषु जडेषु च ।**
**जात्यन्धे बधिरे मूके न दोषः परिविन्दतः ॥ २७ ॥**

कुब्जो वक्रपृष्ठवंशः वामनः खर्वः षण्ढो नपुंसको गद्गदोऽस्पष्टवाक् जडो विकलान्तकरणः । जात्यन्धो जन्मान्धः बधिरः श्रोत्रेन्द्रियविकलः मूको वागिन्द्रियरहितः चकाराद्देशान्तरस्थादीनां ग्रहणम् । तथा च कात्यायनः ।

देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वेश्याभिसक्तपतितशूद्रकल्पातिरोगिणः ॥
जडमूकान्धबधिरकुब्जवामनकुण्ठकान् ।
अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।

कुलटोन्मत्तचौराश्च परिविन्दन्न दुष्यति ॥ इति ।

देशान्तरस्थस्य प्रतीक्षाकालमप्याह ।

स एव ।

धनवार्धुषिकं राजसेवकं कर्षकं तथा ।

प्रोषितं च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥

अत्रापिशब्दसूचितं कालान्तरमाह वसिष्ठः । अष्टौ द्वादश वा वर्षाणि ज्येष्ठभ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवतीति । एकवृषणोऽण्डवृद्धिमान् कुब्जो भग्नपादः अभार्यो मृतभार्यो नैष्ठिकब्रह्मचारी वा कामकारीच्छया विवाहनिवृत्तो वेदमार्गनिवृत्तो वा तदेतान्परिविन्दतो न दोष इति । ननु जडमूकादीनां गायत्र्युच्चारणसामर्थ्याभावात् उपनयनमेव न सम्भवति कुतस्तरां विवाहः कुतस्तमां च परिवेदनदोषो यस्यायमपवाद इति चेत् । नैवम् । ब्रह्मपुराणे तेषामप्युपनयनस्मरणेन विवाहसम्भवात् । तथा हि ।

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ।

तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु ।

जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु ॥

मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।

ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ॥

संस्कारमन्त्रहोमादीन् करोत्याचार्य एव तु ।

उपनेयांश्च विधिवदाचार्यः स्वसमीपतः ॥

आनीयाग्निसमीपं वा सावित्रीं संस्पृशन् जपेत् ।

कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेदिति ॥

तस्मादस्त्येव तेषामपि विवाहप्रसक्तिरिति तत्कनीयसां परिवेदनदोषापवादो युक्त एवेत्यलं विस्तरेण ।

किंच ।

**पितृव्यपुत्रः सापत्नः परनारीसुतस्तथा ।**

**दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ २८ ॥**

पितृव्यस्य पुत्रः सापत्नः सपत्नीपुत्रः परनारीसुतो दत्तकादिर्ज्येष्ठोऽपि कनिष्ठस्य दारसंयोगे विवाहे अग्निसंयोगे आन्याधाने तदुभयरूपे परिवेदने न दोषो न दोषाधायकः। तथा च यमः।

पितृव्यपुत्रान्सापत्नान् परनारीसुतास्तथा।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने॥

गौतमोऽपि।

भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने॥ इति।

दाराग्निहोत्रसंयोग इत्यनेन परिवेदने निमित्तद्वयमुपन्यस्तम्। तदाह मनुः।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥ इति।

तत्र दारसंयोगे निर्णयः पूर्वमुक्तः। इदानीमग्निसंयोगे निर्णयमाह

**ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत्।**
**अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा॥ २६॥**

ज्येष्ठो भ्राता सोदरः स्वयमाधानाधिकारी तिष्ठेच्चेत्कनिष्ठेन त्वनुज्ञां विनाऽन्याधान न कार्यम्। यदि ज्येष्ठोऽनुजानाति तदा तदनुज्ञया कनीयानग्न्याधानं कुर्वीतेति विवाहादग्न्याधाने विशेषाभिधानाय शङ्खस्य महर्षेर्वचनम्।

तथा च वसिष्ठः।

अग्रजस्तु यदानग्निरादध्यादनुजः कथम्।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधीति॥

अनग्निस्सत्यधिकारेऽनाहिताग्निः। अधिकारिणः पितुस्त्वनुज्ञयापि नाधानाधिकारः। तथा च चतुर्विंशतिमते।

ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्यादग्निपरिग्रहम्।
अनुज्ञातोऽपि सन्पित्रा नादध्यान्मनुरब्रवीदिति॥

अनधिकारिणि पितरि त्वनुज्ञा विनापि पुत्रस्याधानाधिकारो भवति तथा च सुमन्तुः ।

पितुर्यस्याग्न्यनाधानं कथं पुत्रस्तु कारयेत् ।
अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥ इति ।

नन्वस्तु परिवेदने कन्याया ज्येष्ठसमर्पणानन्तरं पुनस्तेनैव विवाहो वाग्दानानन्तरमनिष्पन्ने विवाहे तु वरवैगुण्ये ज्ञाते कथमित्यत आह ।

**नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।**
**पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ ३० ॥**

वाग्दानानन्तरं पाणिग्रहात्प्राक् पतावुत्पत्स्यमानपतित्वे पूर्वस्मिन्वरे नष्टे दूरदेशगमनेनापरिज्ञातवृत्तान्ते नारीणां कन्यानामन्यः पतिर्विधीयते । तदाह नारदः ।

परिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून्समतिक्रम्य कन्यान्यं वरयेद्वरम् ॥
स्त्रीपुंसयोस्तु सम्बन्धाद्वरणं प्राक् विधीयते ।
वरणाद्ग्रहणं पाणेः संस्कारोऽपि विचक्षणैः ॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनादिति ।

अयमर्थः । यो वरो वाचा दत्तां कन्यां स्वीकृत्य केन चिद्योगेन देशान्तरं गतस्तं वरं त्रीनृतून् षण्मासानधार्यत्वे कन्यायाः प्रतीक्ष्य धार्यत्वे तु वर्षमात्रमपि ।

प्रदाय शुल्कं कन्याया गच्छेद्यः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयान्यस्मै विधानतः ॥

इति नारदवाक्यात्प्रतीक्ष्य अनन्तरमन्यं वरं सा कन्या वरयेत्तामन्यस्मै दद्यादित्यर्थः । तत्र हेतुमाह स्त्रीपुंसयोः सम्बन्धात् समागमात्प्राक् चितयं क्रियते तत्रादौ वरणं कन्याया वरेण भार्यात्वाय प्रार्थनं वरस्य च सम्प्रदानत्वाय कन्यादात्रा तदेव च वाग्दानं तदनन्तरपाणिग्रहणं ततोऽप्यनन्तरसंस्कारः सप्तपदप्रक्रमस्तयोः पाणिग्रहणसप्तपदक्रमयोरपेक्षया वरणमेवानियतमनियामकं पतिपत्नीसम्बन्धस्य कृतेऽपि "प्रवरणे पतिसम्बन्धः

परावर्तते न पाणिग्रहणादावित्यर्थः । तयोरेव भार्यात्वोत्पादकत्वात् । अत एव मनुः ।

पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ इति ।

तत्रापि हेतुमाह दोषदर्शनादिति वरणपरावृत्तौ वरदोषदर्शनमेव हेतुरित्यर्थः । तदाह गौतमः । "प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति" । तस्माद्वाग्दानानन्तरं पाणिग्रहणात्प्राक् पूर्ववरे नष्टे वरान्तरेण तत्परिणयनं कार्यमिति सिद्धम् । यद्यन्यस्मै दत्तायां कन्यायां पूर्ववरोप्यायाति तदा अनूढां तां स एव लभते ऊढायां तु स्वदत्त द्रव्यमेव लभते न कन्यां तदाह कात्यायनः ।

अनेकेभ्योऽपि दत्तायामनूढायां तु तत्र वै ।
पुरागतश्च सर्वेषां लभते तदिमां सुताम् ॥
अथागच्छेत वोढायां दत्तं पूर्ववरो हरेत् ॥ इति ।

एवं मृतेऽपि पूर्ववरे वरान्तरेण तद्विवाहः कार्यः ।

तथा च वसिष्ठः ।

अद्भिर्वाचा च दत्तायां म्रियेतादौ वरो यदि ।
न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ॥ इति ।

मन्त्रोपनयनं पाणिग्रहणादिकं विना वाचा दानमिवाद्भिरपि दानं न भार्यात्वोत्पादकमित्यर्थः ।

अत एव यमः ।

नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥ इति ।

नन्वस्तु वाग्दत्तायां नष्टे पत्यौ पत्यन्तरविधानं मृते तु तन्नोपपद्यते ।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥

इति मानवे देवरेण तदुद्वहनस्मरणात् । नचैतावतापि समी-

हितसद्भिरविशिष्टैवेति वाच्यम् । देवराच्च सुतोत्पत्तिरित्यनेन कलौ तन्नि-षेधात् । न च निषेधस्य विवाहानन्तरविधवाविषयत्वमस्तु तस्य नान्य-स्मिन् विधवानारी नियोक्तव्या द्विजातिभिरित्यनेन मनुनैव पूर्वं साधारण-तया निषिद्धत्वेन कलौ विशिष्य तन्निषेधानुपपत्तेः । तस्माद्वाग्दानानन्तरं मृते पत्यौ पत्यन्तरविधानमुपपन्नमिति चेत् । सत्यम् । तादृशविवाहस्य वाचनिकत्वेन देवरस्य पतित्वानुपपत्तेर्विशेषनिषेधाच्च । नासावभ्यनुज्ञायते किं तु पतिशब्दस्य मिथ्यापतित्वयोग्योऽभ्यनुज्ञायत इति न किञ्चि-द्दूषणम् । अथ वा मृते मृतकल्पे दीर्घतीव्रापद्ग्रस्त इति व्याख्येयम् । दासो दीर्घामयोऽपि वेति वक्ष्यमाणकात्यायनस्मरणात् । तथा प्रव्रजिते वाग्दा-नानन्तरं वैराग्यातिशयेन सन्यस्ते पूर्वपरे वरान्तराय सा देया । अत एव कात्यायनः ।

दूरस्थानामवेद्यानां मोक्षमार्गानुसारिणाम् ।
शूराणां निर्वृताना च न देया कन्यका बुधैः ॥ इति ।

अवेद्या अज्ञेयाः । निर्वृता भोगेषु निर्विण्णाः । तथा क्लीबे निर्बीजे पूर्ववरे वरान्तरमन्वेषणीयम् ।

तथा च नारदः ।

अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्र बीजिनो नराः ।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हतीति ॥

तथा पतिते महापातकाद्यभिभूते पूर्ववरे वरान्तरं कार्यम् । तथा च गौतमः । प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति । चकाराद-न्यजातीयादेर्ग्रहणम् । तथा च कात्यायनः ।

स तु यद्यन्यजातीयः पतितः क्लीब एव वा ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा ॥
ऊढापि देया सान्यस्मै सहावरणभूषणेति ।

अत्रोढापीत्यपिशब्दः कैमुतिकन्यायेन वाग्दत्ताया एवान्यस्मै-दानमाचष्टे न तु ऊढायास्तथात्वे सगोत्राया अपि पुनर्विवाहः प्रसज्जेत

तथा सति च मातृवत्परिपालयेदिति विरुध्येत पञ्चस्विति प्रचयशिष्ट सख्यानुवादो न परिसख्या । नन्वेवं वाचा दत्ता मनोदत्ता अग्निपरिगता सप्तम पद नीता भुक्ता गृहीतगर्भा प्रसूतावेति सप्तविधा पुनर्भूस्ता गृहीत्वा न प्रजाधर्मं विन्देतेति बौधायनवचो विरोधः स्यादिति चेन्मैवम् । तस्य निर्दुष्टवरविषत्वात् । अत एव नारदः ।

दत्ता न्यायेन यः कन्या वराय न ददाति ताम् ।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥

इति तत्र दण्ड विधत्ते । तस्मादेवविधेषु विषयेषु कृतेऽपि वाग्दाने वरान्तराय दान भवतीति सिद्धम् । इदमित्थमेव व्याख्येयम् ।

उद्वाहितापि सा कन्या न चेत्सम्प्राप्तमैथुना ।
पुनः सस्कारमर्हन्ती यथा कन्या तथैव सा ॥

इत्यादिनारदादिवाक्यैकवाक्यतयोढायाः पुनरुद्वाहविषयत्वेन व्याख्याने तु ।

कुलठायाः पुनरुद्वाह ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजाया कमण्डलुम् ॥

इत्यादि पुराणवचनविरोधो दुष्परिहरः स्यात् । न च युगान्तरीयधर्मकीर्तनमेवेदमिति शङ्कनीय शास्त्रोत्पत्तिप्रयोजनविरोधादित्यास्तामतिविस्तरेण ।

नन्वस्तु वाग्दानानन्तरं विवाहात्प्राक् पूर्वपतिनाशे पत्यन्तरविधानं विवाहानन्तरं तु तन्नाशे कि कार्यमित्यत आह ।

**मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता ।**
**सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥ ३१ ॥**

विवाहानन्तर भर्तरि उत्पन्नभर्तृत्वे मृते या नारी ब्रह्मचर्यव्रते तिष्ठति सा मृता स्वर्गं लभते यथा ते नैष्ठिका ब्रह्मचारिणो ब्रह्मचर्येणैव स्वर्गं लभन्त इति । तथा च याज्ञवल्क्यः ।

मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।
सेह कीर्तिमवाप्नोति मोदते चोमया सहेति ॥

अनेन विवाहानन्तरं भर्तृमरणे ब्रह्मचर्यमेव न तु पत्यन्तरविधानमुक्तं भवति ।

तथा च मनुः ।

कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य त्विति ॥

मृते भर्तरि ब्रह्मचर्यं स्वर्गसाधनं ततोऽपि स्वर्गातिशयसाधनमनुगमनमित्याह ।

**तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे ।**
**तावत्कालं च ते स्वर्गे भर्तारं याऽनुगच्छति ॥ ३२ ॥**

अध्यर्द्धास्तिस्रः कोट्यो मनुष्यदेहे रोमाणि भवन्ति तावदब्दसहस्रं स्वर्गे तो गता भवति या स्त्री भर्तारमनुगच्छति तेन सहाग्निमारोहतीति ।

तथा च हारीतः ।

मृते भर्तरि या नारी धर्मशीला दृढव्रता ।
अनुगच्छति भर्तारं शृणु तस्यास्तु तत्फलम् ॥
तिस्रः कोटयोऽर्द्धकोटी च यानि लोमानि मानुषे ।
तावन्त्यब्दसहस्राणि स्वर्गलोके महीयते ॥
मातृकं पैतृकं चैव यत्र कन्या प्रदीयते ।
कुलत्रयं पुनात्येषा भर्तारं या नुगच्छति ॥

शङ्खः ।

मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
सारुन्धतीसमाचारा स्वर्गे लोके महीयते ॥ इति ।

नचात्र तस्मादुह न पुरायुषः स्वःकामी प्रेयादित्याद्यात्महननप्रतिषेधकश्रुतिविरोधः शङ्क्यः । तस्य सामान्यशास्त्रस्यानुगमनविधायकविशेषशास्त्रविषयपरिहारेण प्रवृत्तेः । नचेदमनुगमनं ब्राह्मण्यातिरिक्तविषयम् ।

मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् ।
इतरेषां तु वर्णानां स्त्रीधर्मोऽयं परः स्मृतः ॥

इति पैठीनस्यादिवचनादिति वाच्यम् । तस्य पृथक्चितिविषयत्वात् । तथाचोशनाः ।

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासां चैव नारीणां धर्मोऽयं परमः स्मृतः ॥

इति । स चायमगर्भिणीनामबालापत्यानामाचण्डलान्तसाधारणो धर्मः । तथा च स्मृत्यन्तरे ।

बालसंवर्द्धनं मुक्त्वा बालापत्या न गच्छति ।
व्रतोपवासनिरता रक्तद्गर्भे च गर्भिणीति ॥

गर्भिण्या अनुगमने यथावर्णं गर्भहननप्रायश्चित्तमेव भवति । लग्नगर्भाया विशेषः स्मृत्यन्तरे ।

आद्वादशाब्दं नारीहेल्लग्नगर्भा हुताशनम् ।
इत ऊर्ध्वं समारोहेद्व्रतं कृत्वाऽऽदिकं स्वयमिति ॥

अदृष्टरजसोऽपि निषेधो बृहन्नारदीये ।

मृतानुगमनं कार्यं नादृष्टरजसा स्त्रियेति ॥

न केवलमनुगमनं स्त्रिया एवाभ्युदयहेतुः किं तु भर्तुरपीत्याह ।

**व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।**
**एवं स्त्री पतिमुद्धृत्य तेनैव सह मोदते ॥ ३३ ॥**

व्यालं सर्पं गृह्णातीति व्यालग्राही कुहकः स्वमन्त्रबलावष्टम्भेन बिलस्थं सर्पं यथोद्धरति तथानुगमनसुकृतबलेनापि नरकपतितमपि पतिमुद्धृत्य तेन सहावशिष्टसुकृतशेषमुपभुङ्क्ते इति । तथा च व्यासः ।

यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः ।
संप्राप्तो यातनास्थानं गृहीतो यमकिङ्करैः ॥
तिष्ठते विवशो दीनो वेष्ट्यमानः स्वकर्मभिः ।
व्यालग्राही यथाव्यालं बलादुद्धृत्यशङ्कितः ॥
तद्वद्भर्त्तारमादाय दिवं याति च सा बलात् ।
या भर्तृपरमा नित्यं स्तूयमानाप्सरोगणैः ॥
क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ।

ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः ।
पुनात्यविधवा नारी तमादाय मृता तु या ॥ इति ।

भजन्त्वजिनसूत्रभृध्धृतकमण्डलुं स्वेच्छया
त्रिवृद्रशनया वृत्त विधृतदण्डकौपीनकम् ।
बलिं छलयितुं मुधा कलितपञ्चपाब्दक्रम
महः किमपि मोहनं कपटवामन पावनम् ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दुश्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते विवृतश्चतुर्थोऽध्यायः प्रकीर्णकसुतादिविर्णयाय ॥ १ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायां चतुर्थोऽध्यायः ।



॥ श्रीगणेशायनमः ॥

वामेनोत्क्षिप्य गोवर्द्धनमभिसुरभिन्यस्तदृष्टिः करेण
प्रत्यालम्ब्यावनम्रीभवदिव सहसा दक्षिणेन स्वमध्यम् ।
प्रावाराबद्धशुद्धासुकरपरिकरस्तत्क्षणेनाम्बुजाक्षः
पायादायासखिन्नः पतिरतिसदयश्रीधरः श्रीधरो वः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
संस्कारसिद्धमभिधातुमिहाहिताग्ने-
रारभ्यते विवरणं किल पञ्चमेऽपि ॥ २ ॥

चतुर्थेऽपि प्रकीर्णकपातकप्रायश्चित्तप्रसक्तानुप्रसक्त्या पुत्रभेदादिस-हगमनान्तनिरूपणेन बुद्धिस्थमाहिताग्निसंस्कारं प्रपञ्चयितुं पञ्चमाध्याय-मारभते। तत्र प्रकीर्णकप्रायश्चित्तप्रकरणाविच्छेदाय तदेव तावदाह ।

**वृकश्वानशृगालाद्यैर्दष्टो यस्तु द्विजोत्तमः ।**
**स्नात्वा जपेत्स गायत्रीं पवित्रां वेदमातरम् ॥ १ ॥**

वृक आरण्य. श्वा कुक्कुरः शृगालो जम्बुकः । आदिशब्देन वानरवराहादीनां ग्रहणम् । एतैर्दष्टो द्विजोत्तमो ब्राह्मणः स्नाना-नन्तरमष्टोत्तरशतवार गायत्रीं जपेत् । तदाहोशना: । दष्ट्रयादिदष्टो गायत्र्यष्टशतं चेति । यत्तु श्वशृगालमहिषाजाविकसूकररासभनकुलमार्जा-रमूषिकासर्पकाकपुरुषदष्टानामापोहिष्ठादिभिः स्नान प्राणायामत्रय चेति सुमन्तुस्मरणात्तन्नाभेरधः प्रदेशे दंष्ट्रदंशविषयं नाभेरूर्ध्वं सम्यग्दंशे तु मूलोक्तमेव द्विगुणादिकल्पनीयम् । तथा चाङ्गिराः ।

नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।
स्यादेतत्त्रिगुणं वक्त्रे मस्तके तु चतुर्गुणमिति ॥

गायत्र्याः पावित्र्यातिशयद्योतनाय विशिनष्टि वेदमातरमिति

वेदानां माता "गायत्री छन्दसां मातेति" स्मरणात् । वेदा मातरो यस्याः सेति वा ।

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥

इति मनुस्मरणात् । एतश्च गृहस्थविषयं परिशेषाद्गम्यते स्नातकादेरग्रे विशेषाभिधानात् ।

एवं ब्राह्मणस्य प्रायश्चित्तमुक्त्वा क्षत्रियादीनां तदाह ।

**गवां शृङ्गोदकैः स्नानान्महानद्यास्तु सङ्गमे ।**
**समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत् ॥ २ ॥**

गवां शृङ्गोदकस्नान नाम गायत्र्या शतवाराभिर्मन्त्रितेन गोशृङ्गपूरितेनोदकेन स्नान तस्मात्, तदाह हारीतः । गोशृङ्गेन शत स्नानं गायत्र्येति । समुद्रगे महानद्यौ, अनयोः सङ्गमे निकटवर्त्तिनि स्नानात्सन्निहितस्य समुद्रस्य दर्शनाद्वा श्वादिदष्टक्षत्रियादिः शुचिर्भवेद् वा शब्दो व्यवस्थितविकल्पार्थः । यद्यप्यत्र क्षत्रियादिपदं न श्रूयते तथाऽपि पूर्वत्र ब्राह्मणस्य प्रायश्चित्ताभिधानादवशिष्टानां स्थानप्रमाणेन क्षत्रियादिविषयत्वं पर्यवस्यति चातुर्वर्ण्यधर्मप्रवचनस्य प्रतिज्ञातत्वात् । एतदसम्भवे हारीतोक्तम् ।

श्वानो वा क्रोष्टुको वापि नारी वा यदि वा नरः ।
आखुर्नकुलमार्जारो वानरग्राम्यसूकराः ॥
एतैर्दष्ट द्विजस्याङ्गे प्रायश्चित्त कथं भवेत् ।
स्नानं कुर्यात्सचैलं तु विप्राणामनुशासनात् ॥
प्रोक्षी गोभिस्तु तिसृभिः कारयेन्मार्जन द्विजः ।
प्राण यामत्रय कुर्याद्गुह्याद्गोभ्तरणं नरः ॥
सह द्विजैस्तु भुक्तेन शुध्यते नात्र सशयः ।

इति द्रष्टव्यम् । शूद्रस्य तु

शूद्राणां चोपवासेन शुद्धिर्दानेन वा पुनः ।
गा च दत्वा वृषं चैक ब्राह्मणाय विशुध्यति ॥

इतिबृहदङ्गिरसोक्तं ज्ञेयम् ।

स्नातकस्य विशेषमाह ।

**वेदविद्याव्रतस्नातः शुना दष्टो द्विजो यदि ।**
**स हिरण्योदकैः स्नात्वा घृतं प्राश्य विशुध्यति ॥ ३ ॥**

वेदविद्याश्चतुर्दश पुराणाद्याः समाप्य स्नातो व्रतानि महानाम्न्यादीनि सौम्यप्राजापत्यादीनि वा समाप्य स्नातः उभयं वा समाप्य स्नातो द्विजस्त्रैवर्णिकः श्वादिदष्टश्चेद्धिरण्यसंसृष्टैरुदकैः स्नात्वा घृतं प्राश्य विशुध्यति । एतदसम्भवे बौधायन आह

वेदविद्याव्रतस्नातः शुना दष्टस्तु ब्राह्मणः ।
शतपर्यायमावर्त्य गायत्रीं शुद्धिमाप्नुयादिति ॥

ब्राह्मण इति त्रैवर्णिकोपलक्षणम् ।

ब्रह्मचारिणो विशेषमाह ।

**सव्रतस्तु शुना दष्टो यस्त्रिरात्रमुपावसेत् ।**
**घृतं कुशोदकं पीत्वा व्रतशेषं समापयेत् ॥ ४ ॥**

सव्रतो ब्रह्मचारी यदि श्वादिभिर्दष्टस्स त्रिरात्रमुपोष्य चतुर्थेऽहनि घृतकुशोदकं च पीत्वा व्रतशेषं समापयेत्समावर्त्तयेत् । एतदसम्भवे बौधायनोक्तम्

सव्रतस्तु शुना दष्टस्त्रिरात्रमुपवासयेत् ।
सघृतं यावकं पीत्वा व्रतशेषं समापयेत् ॥

इति द्रष्टव्यम् ।

उक्तप्रायश्चित्तान्तकर्तव्यमाह ।

**अव्रतः सव्रतो वापि शुना दष्टो भवेद्द्विजः ।**
**प्रणिपत्य भवेत्पूतो विप्रैश्चक्षुर्निरीक्षितः ॥ ५ ॥**

अव्रतो गृहस्थादिर्दष्टः पूर्वोक्तप्रायश्चित्ताचरणानन्तरं ब्राह्मणान् प्रणिपत्य तैर्विप्रैश्चक्षुर्भिर्निरीक्षितः पूतो भवति ।

ब्राह्मणासम्भवे दर्शनं स्वयमेव कार्यम् । तदाहाङ्गिराः ।

अव्रती सव्रती चापि शुना दष्टस्तु यो द्विजः ।
दध्याग्नीन् हूयमानांस्तु सद्य एव शुचिर्भवेत् ॥ इति ।

इदं स्वतन्त्र प्रायश्चित्तान्तरमिति न शङ्कनीयम् । अन्यानर्थक्यन्यायेन पूर्वोक्तप्रायश्चित्तानर्थक्यप्रसङ्गात् । तस्मात्प्रकरणात्पूर्वोक्तप्रायश्चित्तानामुत्तराङ्गमिति ।

दंशाभावे श्वादिघ्राणाद्युपघाते विशेषमाह ।

**शुना घ्रातावलीढस्य नखैर्विलिखितस्य च ।**
**अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपचूलनम् ॥ ६ ॥**

यस्तु श्वादिभिर्दष्टो न किं तु केवलं नासिकया घ्रातो जिह्वया वावलीढो नखैर्वा विलिखितः स सर्वोऽपि तं देशं प्रक्षाल्य वन्हिना पर्यग्नीकृत्य शुद्धः स्यात् ।

स्त्रीणां विशेषमाह ।

**ब्राह्मणी तु शुना दष्टा जम्बूकेन वृकेन वा ।**
**उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥ ७ ॥**

श्वादिदष्टा ब्राह्मणी रात्रावुदितान् सोमभौमादीन् ग्रहानश्विन्यादीनि नक्षत्राणि चावलोक्य शुद्धा भवति कृच्छ्रादिव्रतस्याया विशेषोऽन्यत्र दर्शितः ।

त्रिरात्रमेवोपवसेच्छुना दष्टा तु सव्रता ।
सघृतं यावकं भुक्त्वा व्रतशेषं समापयेत् ॥ इति ।
रजस्वलायां विशेषमाह पुलस्त्यः ।
रजस्वला यदा दष्टा शुना जम्बूकरासभैः ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥
ऊर्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं स्मृतम् ॥
चतुर्गुणं मूर्ध्नि दष्टेऽन्यत्रसोमस्तुतिर्भवेत् ॥ इति ।

अन्यत्रारजस्वलावस्थायां सोमस्तुतिर्भवेत् तच्च मूलेऽप्युपलक्षितमेवेति ।

कृष्णपक्षादौ सोमदर्शनासम्भवे किं कार्यमित्यत आह ।

**कृष्णपक्षे यदा सोमो न दृश्येत कदा च न ।**
**यां दिशं व्रजते सोमस्तां दिशं चावलोकयेत् ॥ ८ ॥**

कृष्णपक्षे कदा च न दुर्दिनादौ च यदा सोमो न दृश्यते कदाचन या दिश व्रजते तदा यस्यां दिशि सोमः सम्भाव्यते प्राच्यां प्रतीच्यां वा तां दिशमवलोकयेत् । सोमदर्शनं पञ्चगव्यप्राशनस्याप्युपलक्षणम् । अत एवाङ्गिराः ।

ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ।
यदा न दृश्यते सोमः प्रायश्चित्तं कथं भवेत् ॥
या दिशं तु गतः सोमस्तां दिशं चावलोकयेत् ।
सोममार्गेण सा पूता पञ्चगव्येन शुध्यतीति ॥
सोमदर्शनाद्वा शुद्धिस्तदाह बौधायनः ।
ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ॥
समुद्रदर्शनाद्वापि शुना दष्टा शुचिर्भवेत् ।

उक्तप्रायश्चित्ताचरणानन्तरं ब्राह्मणप्रणिपाततच्चिरीक्षणाभ्यां शुद्धिरित्युक्तम् । ब्राह्मणासन्निधाने तु कथमित्यत आह ।

**असद्ब्राह्मणके ग्रामे शुना दष्टो द्विजोत्तमः ।**
**वृषं प्रदक्षिणीकृत्य सद्यः स्नात्वा शुचिर्भवेत् ॥ ९ ॥**

यस्मिन् ग्रामे ब्राह्मणा न सन्ति तत्र श्वादिदष्टो ब्राह्मणः स्नानानन्तरं वृषभं प्रदक्षिणीकृत्य शुद्धः स्यात् । नन्विदं श्वादिदंशे प्रायश्चित्तमनुपपन्नं तस्य विधिप्रतिषेधातिक्रमरूपत्वाभावेन प्रत्यवायाजनकत्वात् । तदभावे च तद्विनाशकप्रायश्चित्तमनर्थकमिति चेत् । सत्यम् । प्रायश्चित्तविधानान्यथानुपपत्त्या प्रत्यवायसद्भावे कल्पनीये ऐहिकतदभावनिश्चये जन्मान्तरीयकारणजन्यप्रत्यवायसद्भवकल्पनादिति नानुपपत्तिः ।

एवं नवभिः श्लोकैः श्वादिदंशप्रायश्चित्तमभिधायाधुना दुर्मृतस्याहिताग्नेः संस्कारमाह ।

**चण्डालेन श्वपाकेन गोभिर्विप्रो हतो यदि ।**
**दहेत्तं ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ॥ १० ॥**

ब्राह्मण्यां शूद्राज्जातश्चाण्डालः ।

ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥

इति योगिस्मरणात् । क्षत्तायामुग्राज्जातः श्वपाकः "उग्रात्तु जातः क्षत्ताया श्वपाक इति कीर्तित इति मनुस्मरणात् । ताभ्या गोभिर्वा यद्याहिताग्निर्विप्रो हतः मृतः प्राणैर्वियुक्तः यदि वा विशेषविषादिना आत्मनैव हतो मृतस्तदोभयथापि सपिण्डः कश्चित् विप्रो लौकिकेनाग्निना मन्त्रैर्विवर्जितं दहेत् ।

नन्वेतादृशस्य दहन पूर्वाध्यायादौ निषिद्धमिति कथमिहोच्यत इत्यत आह ।

**स्पृष्ट्वा वोढ्वा च दग्ध्वा च सपिण्डेषु च सर्वथा ।**
**प्राजापत्यं चरेत्पश्चाद्विप्राणामनुशासनात् ॥ ११ ॥**

पूर्वोक्तं चण्डालादिहतमात्महतं वा सपिण्डेष्वेवान्यतमो विप्रः स्पृष्ट्वा वोढ्वा दग्ध्वा च पश्चाद्विप्रानुशासनाद्विप्राज्ञया सर्वथा प्राजात्यं चरेत् ।

अनेन पश्चात्सर्वथेतिपदद्वयप्रयोगेण बुद्धिपूर्वकं निषेधातिक्रमेण दाहादिकं कृत्वा प्रायश्चित्त कार्यमिति गम्यते न तु प्रमादिके तत्कारणप्रायश्चित्तमनेनोच्यत इति । तथा च दग्ध्वास्थीनि पुनर्दहेदिति नित्यवत् पूर्वदाहानुविधानमर्थे नोपपद्येत । नच चतुर्थाध्यायादौ दुर्मृतवहनादिप्रायश्चित्तविधानादेतस्य पुनरुक्तत्व वाच्यम् । एतस्याहिताग्निविषयत्वकल्पनात् । प्राजापत्याचरणानन्तरं किं कार्यमित्यत आह ।

**दग्ध्वास्थीनि पुनर्गृह्य क्षीरेण क्षालयेद् द्विजः ।**
**स्वेनाग्निना स्वमन्त्रेण पृथगेतत्पुनर्दहेत् ॥ १२ ॥**

उक्तरीत्या दुर्मृतमात्महतं च दग्ध्वा तदीयान्यस्थीनि पुनर्गृह्य गृहीत्वा क्षीरेण प्रक्षाल्य द्विजो विप्रादिः स्वेन श्रौतेन स्मार्तेन वाग्निना स्वमन्त्रेण स्वकल्पोक्तमन्त्रकलापेन पृथक् कालान्तरे संवत्सरान्ते पुनर्दहेत् । तदेतत्सर्वमाह हारीतः ।

ब्राह्मणाद्वधसम्प्राप्तौ चण्डलास्य करेण वा ।
आत्मना शस्त्रपाते च शूद्रवद्दाहयेद्द्विजम् ॥
प्राजापत्यं चरेत्पश्चात्सपिण्डेषु वसन्नुमान् ।
तद्भस्मास्थि गृहीत्वैव विप्राणामनुशासनात् ॥
क्षीरप्रक्षालनं कुर्यात्तदस्थि प्रेतवद्गृहे ।
पुनर्दहेत मन्त्रैश्च यथाविधि समाचरेत् ॥
एवमेव विधिं कुर्यान्मरणे गर्हितस्य चेति ।
सवत्सरात्तदित्युक्तं षट्त्रिंशन्मते ।
गोब्राह्मणहतानां च पतितानां तथैव च ।
उर्ध्वं सवत्सरात्कुर्यात्सर्वमेवौर्ध्वदैहिकम् ॥
तच्च नारायणबलिपूर्वकं कार्यमित्याह छागलेयः ।
नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥ इति ।
नारायणबलिस्वरूप च वैष्णवेऽभिहितम् ।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ।
विष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा ॥
दश पिण्डान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् ।
तिलमिश्रान् प्रदद्याद् द्वौ संयतो दक्षिणामुखः ॥
विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् ।
नामगोत्रग्रहं गन्धपुष्पैरभ्यर्चनं तथा ॥
धूपदीपप्रदानं च भक्ष्यभोज्यं ततः परम् ।
निमन्त्रयेत विप्रान् वै पञ्च सप्त नवापि वा ॥
विद्यातपःसमृद्धान्वै कुलोत्पन्नान् समाहितः ।
अपरेऽहनि सम्प्राप्ते मध्याह्ने समुपोषितः ॥

विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत् ।
उदङ्मुखान् यथाज्येष्ठं पितृरूपमनुस्मरन् ॥
नमो निवेश्य विष्णौ तु सर्वं कुर्यादतन्द्रितः ।
आवाहनादि यत्प्रोक्तं दैवपूर्वन्तदाचरेत् ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं पृष्ट्वा यथाविधि ।
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ॥
पञ्च पिण्डान् प्रदद्याद् द्वै देवरूपमनुस्मरन् ।
प्रथमं विष्णवे दद्याद् ब्रह्मणे च शिवाय च ॥
यमाय सानुचराय चतुर्थं पिण्डमुत्सृजेत् ।
मृतसंकीर्तमनसा गोत्रपूर्वमतः परम् ॥
विष्णोर्नाम गृहीत्वैवं पञ्चमं पूर्ववत् क्षिपेत् ।
विप्रानाचम्य विधिवद्दक्षिणाभिः समर्चयेत् ॥
एकं प्रेतकृतं विप्र हिरण्येन समर्चयेत् ।
गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ॥
ततस्तिलाम्भो विप्रास्तु हस्तैर्दर्भसमन्वितैः ।
क्षिपेयुर्गोत्रपूर्वं तु नाम बुद्धौ निवेश्य च ॥
हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहितः ।
मित्रभृत्यजनैः सार्द्धं पश्चाद् भुञ्जीत वाग्यतः ॥
एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने ।
समुद्धरति तं क्षिप्र नात्र कार्या विचारणेति ॥
सर्पदंशे मनुना विशेषोऽभिहितो भविष्यत्पुराणे ।
सुवर्णभारनिष्पन्न नागं कृत्वा तथैव च ।
गां व्यासाय तथा दत्वा विधिवत्पुण्यमाप्नुयात् ॥ इति ।

ननु दुर्वृत्तानां लौकिकाग्निना दाहोऽनुपपन्नः । तद्देहस्य गङ्गादौ प्रतिपत्तिस्मरणात् । तथा च स्मृत्यन्तरम् ।

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापन हितमिति ॥
तथा स्वाग्निना पुनर्दाहोऽप्यनुपपन्नः ।
वैतानं प्रक्षिपेदप्सु आवसथ्य चतुष्पथे ॥

पात्राणि च दहेदग्नौ यजमाने तथा मृते ।

इत्यनेन तदग्नीना प्रतिपत्तिविधानादिति चेद् बाढम् । मूलोक्तकल्पादनयोः कल्पान्तरविधायकत्वेनानुपपत्तिपरिहारात् । तर्हि कल्पान्तरेऽप्यौर्ध्वदेहिकस्य देहाग्न्योः प्रतिपादितत्वेन न दाहसम्भव इति चेत् सत्यम् । देहाग्निप्रतिपत्त्या दाहलोपेन तदुत्तरकालीनोदकादिक्रियायास्तत्रेष्टत्वात् । अत एव त्रिकाण्डमण्डनः अग्नौ सति स्यादथदेहक्लृप्तिरथास्थि चेदग्निरपेक्षणीय अस्थ्यग्न्यभावे त्वशरीरस्य मरणादि न अथ देहास्थ्यभावे पलाशवृन्तादिभिर्देहः कल्पनीयः । देहास्थिसद्भावे प्रेताधानादिना विछिन्नोऽप्यग्निराहरणीयः । प्रतिपत्त्यादिना देहास्थ्नोरग्नेश्चाभावे तूदकक्रियामारभ्यैवौर्ध्वदेहिकं कार्यम् । उभयप्रतिपत्त्या दाहस्य लुप्तत्वात् । अत एव गौतमोऽपि । तस्य प्राणान्तिकं प्रायश्चित्त स मृतः शुध्येत्तस्मिन्नुदकादीनि सर्वाणि प्रेतकार्याणि इत्युदकादीनीत्येवोक्तवान्न तु दाहादीनीति ।

नच दाहाभावे शरीरसंस्काराभावादुत्तरक्रियास्वप्यनधिकार इति वाच्यम् । सन्यासिनो निखननस्येवात्र गङ्गादितोये प्रक्षेपस्यैव तत्संस्कारत्वात् । नचोर्ध्वं संवत्सरात् कुर्यात्] सर्वमेवौर्ध्वदेहिकमिति सर्वं चश्रुतिविरोधः शङ्कनीयः । सर्वत्वमाधिकारिकमिति न्यायेन दाहातिरिक्तस्यैवाधिकृतस्य सर्वशब्देन परामर्शादित्यलमतिविस्तरेण ।

एवं सार्धश्लोकत्रयेण दुर्मृतस्याहिताग्नेः संस्कारोऽभिहित इदानीं प्रोषितस्य देहक्लृप्तिं सार्द्धदशभि श्लोकैराह ।

**आहिताग्निर्द्विजः कश्चित्प्रवसन्कालचोदितः ॥**
**देहनाशमनुप्राप्तस्तस्याग्निर्वर्तते गृहे ॥ १३ ॥**
**प्रेताग्निहोत्रसंस्कारः श्रूयतां ऋषिपुङ्गवाः ।**

आहिताग्निः श्रौताग्निमान् द्विजस्त्रैवर्णिकः कालेन चोदितो वशीकृतः प्रवसन् देशान्तरस्थ एव देहनाशं मरणं प्राप्तस्तस्य चाग्निर्गार्हपत्यादिर्गृहे वर्तते मृताग्निहोत्रादिविधिना पाल्यमानः तिष्ठति च

तदा प्रेतस्याहिताग्नेर्गृहे विद्यमानस्याग्निहोत्रस्याग्नित्रयस्य च संस्कारस्स भो व्यासप्रमुखा ऋषिपुङ्गवाः श्रूयताम् । प्रायश्चित्तप्रस्तावे आहिताग्निसंस्कारस्यासङ्गतिपरिहाराय पुनरवधानदानं मरणादिशब्देनैवार्थसिद्धौ देहनाशशब्दोऽस्थ्याद्यलाभसूचनाय तदभाव एव पालाशप्रतिकृतिविधानात् । अत एव छन्दोगपरिशिष्टे ।

विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा ।
दाहयेदूर्णया ऽऽच्छाद्य पात्रन्यासादिपूर्ववत् ॥
अस्थ्नामभावे पर्णानि सकलान्युक्तयावृत्तेति ।

प्रतिज्ञातं प्रेतसंस्कारमाह ।

**कृष्णाजिनं समास्तीर्य कुशैस्तु पुरुषाकृतिम् ॥ १४ ॥**

कृष्णमृगस्याजिने स्वास्तीर्य कुशैः पुरुषस्याकारं कुर्यात् । कुशपुत्रकदाहेन तस्य स्यादवधारणमिति लिङ्गात् ।

कुशाभावे द्रव्यान्तरमाह ।

**कार्या प्रतिकृतिस्तस्य पलाशानां च पत्रतः ।**
**षट्शतानि शतान्यानि पालाश्यः समिधस्तथा॥ १५॥**
**चत्वारिंशच्छिरे दद्याच्छन्तं कण्ठे तु विन्यसेत् ।**

कुशाभावे तस्मिन्नेव कृष्णाजिने षट्शतानि शतं चेत्येवं तानि सप्तशतानि पलाशानां पलाशपत्राणां सार्वविभक्तिकः सित्तसिल् । यथोक्तविभागेन विन्यसेत् पलाशवृन्ताना कुशसमानकार्यत्वेन च शब्दस्य वा शब्दार्थतया विकल्पाभिधानात्पर्यायान्तरमेतच्च "एवं पर्णशरं दग्ध्वेति लिङ्गात् । विभागे सङ्ख्यामाह । शिरे शिरसि चत्वारिंशत् कण्ठे च शतं दद्यादिति अङ्गान्तरेष्वपि तामाह ।

**बाहुभ्यां च शतं दद्यादङ्गुलीषु दशैव तु ॥ १६ ॥**
**दद्यादष्टौ वृषणयोः पञ्च मेढ्रे तु विन्यसेत् ।**
**एकविंशतिमूरुभ्यां द्विशतं जानुजङ्घयोः ॥ १७ ॥**

पादाङ्गुष्ठेषु दद्यात्षट् यज्ञपात्रं ततो न्यसेत् ।

बाहुद्वयेशतं शतमिति शतद्वयं पादद्वये ऽप्येवं पादाङ्गुलीषु पञ्च पञ्चेत्येवं दश कराङ्गुलिषु प्रत्येकमेवं दश जघने शतमुदरे शतद्वयं, वृषणयोः प्रत्येकं चत्वारि चत्वारीत्येवमष्टौ ऊरुषु दश "विभागेन समं स्यादश्रुतत्वादिति भावः । जानु च जङ्घा च तद्वये प्रत्येकं शतमेवं शतद्वयं पादाङ्गुष्ठेषु पञ्च मुखे पलाशै र्देहाकृतिं निर्माय तदुपरि यज्ञपात्राणि विन्यसेत् ।

तमेवं यज्ञपात्रविन्यासमाह ।

शम्यां शिश्ने विनिक्षिप्य अरणीं मुष्कयोरपि ॥ १८ ॥
जुहूं च दक्षिणे हस्ते वामे उपभृतं न्यसेत् ।
पृष्ठे चोलूखलं दद्यात्पृष्ठे च मुसलं न्यसेत् ॥ १९ ॥
उरसि क्षिप्य दृशदं तण्डुलाज्यतिलान्मुखे ।
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीं च चक्षुषोः ॥ २० ॥
कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं न्यसेत् ।

अग्निहोत्रोपकरणमशेषं तत्र निक्षिपेत् ॥ २२ ॥
असौ स्वर्गाय लोकाय स्वाहेत्येकाहुतिं सकृत् ।
दद्यात्पुत्रोऽथ वा भ्राताप्यन्यो वापि च बान्धवः॥२३॥
यथा दहनसंस्कारस्तथा कार्यो विचक्षणैः ।

शिश्ने शम्यां मुष्कयोरण्डकोशयोररणिं दक्षिणेतरयोर्हस्तयोर्जुहूपभृतावुलूखलमुसले पृष्ठे उरसि दृशदं मुखे तण्डुलाज्यतिलान् श्रोत्रे प्रोक्षणीं चक्षुषोः स्थालीं कर्णाक्षिघ्राणमुखेषु हिरण्यशकलमेवं स्वकर्मानुसारेणाशेषमग्निहोत्रोपकरणं स्फ्यशूर्पचमसादि तत्र तत्र निक्षिप्यासावित्याज्याहुतिं शवदेहे हुत्वा पुत्रास्त्रिवर्ताः स्वशाखोक्तरीत्या जुहुयुरिति । ये तु

देशान्तरगते विप्रे विपन्ने कालपर्ययात् ।
शरीरनाशे कल्पः स्यादाहिताग्नेर्विशेषतः ॥

कृष्णाजिनमुपास्तीर्य पुरुषाकृतिमेव च ।
त्रीणि षष्ठशतं वृन्तान् पलाशास्तु समाहितः ॥
अशीत्यर्द्धं शिरे दद्याद् ग्रीवायां दश चैव हि ।
बाहुभ्यां च शतं दद्यादङ्गुल्योर्दश एव च ॥
उरसि त्रिशतं दद्याज्जठरे विंशतिं तथा ।
ऊरुभ्यां तु शतं दद्यात्त्रिशतं जानुजङ्घयोः ॥
पादाङ्गुल्योर्दश दद्यादेतत्प्रेतस्य लक्षणम् ।

तथा ।

नारिकेलं शिरस्येव कपाले ताम्रभाजनम् ।
चक्षुषोर्मौक्तिकं दद्यादोष्ठे दद्यात्प्रवालकम् ॥
दन्तेषु दाडिमीबीजं केशेषु चमरं तथा ।
कस्तूरिका च ग्रीवया कर्णयोः शिबिका तथा ॥
नखे कपर्दकान् दद्याच्छिश्ने च कदलीफलम् ।
वृन्ताक मुष्कयोर्दद्याद्रक्ते चेङ्गुलक तथा ॥
वीर्ये च पारदं दद्याद्धरिताल मनः शिलाम् ।
मज्जायां वृक्कयोश्चैव जम्बीरफलमेव च ॥
ऊर्णासूत्रेण संवेष्ट्य यवपिष्टेन लेपयेत् ।
नामगोत्रं समुच्चार्य वस्त्रेणाच्छादयेदपि ॥
पुनः प्राणेति मन्त्रेण प्राणान्संवेश्य तत्तथा ।
एवं पर्णशरं कृत्वा देहे च विधिपूर्वकम् ॥

इत्यादयो हारिताद्यभिहिताः संख्याविनियोगविशेषास्तेऽपि शाखाभेदेन युगभेदेन वा व्यवस्थापनीयाः । यद्यप्यत्राहिताग्निमुपक्रम्याय विधिराम्नातस्तथाप्ययं भवति अनाहिताग्नेरपि ।

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः ।
तदभावे पलाशानां पत्रैः कार्यः पुमानपि ॥

इति ब्रह्मपुराणात् । यदि पर्णशरदाहे क्रियमाणे तदस्थीनि लभ्यन्ते तदार्धदग्धकाष्ठानि निर्मन्थितेनाग्निना तान्यपि दहेत् समाप्ते तु दाहेऽर्धदग्धकाष्ठाभावे तानि जले प्रक्षिपेत् । तदाह ब्रह्मपुराणे ।

अथ पर्णशरे दग्धे पात्रन्यासे कृते सति ।
गतेष्वग्निषु तद्देहो यद्वाद्दै लभ्यते क्वचित् ॥
तदार्द्रदग्धकाष्ठानि तानि निर्मथ्य तं दहेत् ।
यद्यार्द्रदग्धकाष्ठं तु तदीयं च न लभ्यते ॥
तदा तदस्थिखण्डं तु निक्षेप्तव्यं महाजले । इति ।
तत्र विधेरन्वयव्यतिरेकाभ्यां फलमाह ।

**ईदृशं तु विधिं कृत्वा ब्रह्मलोके गतिः स्मृता ॥२४॥**
**दहन्ति ये द्विजास्ते तु ते यान्ति परमां गतिम् ।**
**अन्यथा कुर्वते कर्म त्वात्मबुध्या प्रचोदिताः ॥ २५ ॥**
**भवन्त्यल्पायुषस्ते वै पतन्ति नरकेऽशुचौ ।**

यस्याहिताग्नेरीदृशं विधिं कुर्यात्तस्य ब्रह्मलोकगतिः स्मृता पूर्वैः । ये तु तमाहिताग्निमुक्तरीत्या दहन्ति तेऽपि परां गतिं यान्ति आत्मबुध्यान्यथाकारिणामल्पायुर्नरकपातश्चेति

नेत्रे निद्रेवजिह्वां रस इव मधुरः प्रेममूर्छैव चेतः
श्रोत्रे चञ्चद्विपञ्चीनिनद इव नृणां भक्तिसक्तिभाजम् ।
दृष्टः सङ्कीर्त्तितो वा हृदि तु कथमपि ध्यात आकर्णितो वा
तत्तत्सम्पर्कमात्रादमलयतितरां तं हृषीकेशमीडे ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते खलु चाहिताग्ने-
रध्याय एष विवृतः किलपञ्चमोऽपि ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायां पञ्चमोध्यायः ॥ शुभमस्तु ।



श्रीगणेशाय नमः ।

संवर्ताद्वेलदुग्धांबुधिबहलरयप्रोच्छलद्वल्गदच्छत्
क्षीरायव्यस्तवीचीचलदमलपदः शेषभोगभ्रमेण ।
व्यामीलन्नेत्रयुग्मः श्लथवपुरुदयद्योगनिद्रावगाढो
ह्रीणः पद्माकटाक्षैः प्रथयतु भगवान् पद्मनाभः श्रियं नः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
व्याख्यायते हि मलिनीकरणादिशुद्धिं
वक्तुं पराशरकृताविह षष्ठ एषः ॥ २ ॥

चतुर्थपञ्चमाभ्यां प्रकीर्णकप्रायश्चित्तं तत्प्रसङ्गागतं चान्यदपि निरूपितम् । इदानीं मलिनीकरणसङ्कुलीकरणयोः स्वरूपमाह । मनुः—

कृमिकीटवयोहत्या मद्यानुगतभोजनम्
फलैधः कुसुमस्तेयमधैर्यं च मलावहम् ।
खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य चेति ॥

उपपातकस्वरूपपरिशिष्टं वक्ष्यामः । तदेवमध्यायार्थं तावद्वक्तुं प्रतिजानीते ।

**अतः परं प्रवक्ष्यामि प्राणिहत्यासु निष्कृतिम् ।**
**पराशरेण पूर्वोक्तामन्वर्थेऽपि च विस्तृताम् ॥ १ ॥**

अतः परं प्रकीर्णकप्रायश्चित्ताभिधानानन्तरं प्राणिनां हत्यासु बहुवचनेन मलिनीकरणसङ्करीकरणोपातकरूपत्वेन बहुविधासु पराशरेण पूर्वस्मिन् युगे कलियुगोक्तामभिहितामन्वर्थे सूक्ष्मेऽप्यर्थे सङ्करापात्रकृत्यासु मासः शोधनमैन्दवः । मलिनीकरणीयेषु पक्षः स्याद्यावकस्त्वह-मित्याद्येकोपाधिना प्रायश्चित्ताभिधानसंभवेऽपि विस्तृतां प्रतिपदोक्तां निष्कृतिं प्रायश्चित्तरूपां वक्ष्यामि ।

तत्र मलिनीकरणे प्रायश्चित्तमाह ।

**क्रौञ्चसारसहंसांश्च चक्रवाकं च कुक्कुटम् ।**
**जालपादं च शरभं हत्वाऽहोरात्रतः शुचिः ॥ २ ॥**

क्रौञ्चः क्रुङ् सारसो लक्ष्मणः हंसचक्रवाककुक्कुटाः प्रसिद्धाः । अजालपादा अपि हंसाः सन्तीति पृथगुपात्तः । शरभः एतान् हत्वा अहोरात्रत एकोपवासेन हन्ता शुचिर्भवति । चकारात्तित्तिरिशुकसारिकादीनामपि समुच्चयः, तथा च सर्वतः ।

चक्रवाकं तथा क्रौञ्चं तित्तिरं शुकसारिकां ।
श्येनं गृध्रमुलूकं च तथा पारावतान्यपि ॥
टिटिभं जालपादं च मद्गुं कुक्कुटमेव वा ।
एवं पक्षिषु सर्वेषु दिनमेकमभोजनमिति ॥

एतेन मन्वाद्युक्त गोदानमप्रत्यादिष्टम् । बलाकादिषु विशेषमाह

**बलाकाटिट्टिभौ वापि शुकपारावतावपि ।**
**अटीनबकघाती च शुध्यते नक्तभोजनात् ॥ ३ ॥**

बलाका प्रसिद्धा । टिट्टिभस्तच्छब्दानुकारी शुकः कपोतः परावतः एतान्हत्वेति पूर्वेणानुषज्यते अटीनः शरारी बकः प्रसिद्धस्तौ हन्ति इति तद्घाती च दिवाभोजनपरिहारेण नक्तभोजनाच्छुध्यति । यत्तु पूर्वोक्तसर्वत्तवाक्येनोपवासश्रवणं तत्कामकारादिविषयं "विहितं यदकामाना कामात्तद्द्विगुणं भवेदि"तिवचनात् । उपवासस्य भोजनद्वयपरिहारात्मकत्वेन दिवा भोजनाभावसहकृतनक्तभोजनाद्द्विगुणत्वात् । यत्तु तेनैवोक्तम् ।

हंस बक बलाकां च श्वाविधं बर्हिणस्तथा ।
सारस चाषभासाश्च हत्वा त्रीन्दिवसान् क्षिपेत् ॥

इति तदत्यन्ताभ्यासविषयम् ।

किञ्च

**वृककाककपोतानां सारीतित्तिरिघातकः ।**
**अन्तर्जल उभे सन्ध्ये प्राणायामेन शुध्यति ॥ ४ ॥**

वृकः पक्षिविशेषः पक्षिसमभिव्याहारात्नत्वारण्यः श्वा, तस्याग्र वक्ष्यमाणत्वात् । काककपोतौ प्रसिद्धौ । एतेषां घातकः समस्तस्याप्यस्य बुध्यावच्छिन्नत्वान्वयात् । सारीतित्तिरौ प्रसिद्धौ तयोश्च घातकोऽन्तर्जले जलमध्ये उभे सन्ध्ये सायं प्रातः सन्ध्ये अत्यन्तसंयोगे द्वितीयाश्रवणात्ते अभिव्याप्य प्राणायामेन तावत्कालाभ्यस्तेन शुध्यतीति ।

किञ्च ।

**गृध्रश्येनशशादीनामुलूकस्य च घातकः ।**
**अपक्वाशी दिनं तिष्ठेत्त्रिकालं मारुताशनः ॥ ५ ॥**

गृध्रो दाक्षाय्यः, श्येनः पत्री शशादस्तदवान्तरजातिः, उलूकः पेचकस्तेषां घातकः, एकस्मिन् दिने अपक्वं कन्दमूलफलमशित्वा ततः परदिने कालद्वयेऽपि तृतीयदिने तु दिवा मारुतमेवाशित्वा रात्रौ भुञ्जीतेत्येवं सार्द्धदिनद्वयं प्रायश्चित्तं भवति । अत्राशक्तस्य कश्यप आह । बकबलाकासारसकारण्डवचक्रवाककुररगृध्रश्येनखञ्जरीटटिट्टिभोलूकसारिकातित्तिरिमयूरकुरमुखामेजनककलविङ्ककपारावतादीनां वधे प्रायश्चित्तमहोरात्रोपोषितः सर्वबीजानि च दद्यादिति ।

किञ्च ।

**वल्गुलीटिट्टिभानां च कोकिलाखञ्जरीटयोः ॥**
**लाविकारक्तपक्षाणां शुद्ध्यते नक्तभोजनात् ॥ ६ ॥**

वल्गुली पक्षिविशेषः । टिट्टिभस्य पुनर्वचनमवान्तरजातिभेदादिप्रापणार्थं कोकिला परभृता अत्र सर्वत्र लिङ्गमविवक्षितमुद्देश्यगतत्वात् । खञ्जरीटः खञ्जनः लाविका लावः, रक्तपक्षाः लोहितपक्षाः, एतेषां पूर्ववाक्यादनुशक्तो घातको नक्तभोजनाच्छुध्यति ।

किञ्च ।

**कारण्डवचकोराणां पिङ्गलाकुररस्य च ॥**
**भारद्वाजादिकं हत्वा शिवं संपूज्य शुध्यति ॥ ७ ॥**

कारण्डवः प्लवः चकोरपिङ्गले प्रसिद्धे कुररः उत्क्रोशः भारद्वाजो व्याघ्राटः । आदिशब्देनोक्तातिरिक्तानामन्येषामपि ग्रहणम् । एतान् हत्वा शिवं विधिवत् सपूज्य शुध्यति ।

किञ्च ।

**भेरुण्डचाषभासांश्च पारावतकपिञ्जलान् ॥**
**पक्षिणां चैव सर्वेषामहोरात्रमभोजनम् ॥ ८ ॥**

भेरुण्डः पक्षिविशेषः चाषः किकीदिवः भासः पक्षिविशेषः पारावतस्य पुनर्वचनं प्रायश्चित्तविकल्पार्थं कपिञ्जलः पक्षिविशेषः एतान् हत्वेत्यनुषङ्गः पक्षिजातीनामानन्त्यात्पृष्टाकोटिन्यायेन वक्तुमशक्तेरेकोपाधिना तेषु प्रायश्चित्तमाह । पक्षिणां चैव सर्वेषां हनन इति शेषः । अहोरात्रमभोजनमेकाहोपवास इति । एवं मलिनीकरणविशेषे प्रायश्चित्तविशेष आचार्येरुक्तः । अवशिष्टे कृमिकीटवधादौ प्रायश्चित्तं स्मृत्यन्तरोक्तं द्रष्टव्यम् । तदाह ।

मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहमिति ।

इदानीं सङ्करीकरणे प्रायश्चित्तमाह ।

**हत्वा मूषकमार्जारसर्पाजगरडुण्डुभान् ।**
**कृसरं भोजयेद्विप्रान् लोहदण्डं च दक्षिणा ॥ ९ ॥**

मूषकादयोऽजगरान्ताः प्रसिद्धाः डुण्डुभो राजिलश्चकारान्नकुलश्चैतान् हत्वा कृसरं तिलमुद्गमिश्रमोदनं त्रीन् ब्राह्मणान् भोजयित्वा लोहदण्डदक्षिणां दद्यादिति । तथा च विष्णुः । हत्वा मूषकमार्जारनकुलडुण्डुभाजगराणामन्यतमं कृसरान्नं भोजयित्वा लोहदण्डं दक्षिणां दद्यादिति ।

किञ्च ।

**शिशुमारं तथा गोधां हत्वा कूर्मं च शल्यकम् ।**
**वृन्ताकफलभक्षी चाप्यहोरात्रेण शुध्यति ॥ १० ॥**

शिशुमारः सूसिः गोधा कृकलासानुकारिणी कूर्मः कच्छपः शल्यकः

